चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्त्तिताः ॥
मन्त्रदीक्षा च विविधा तथैवान्येष्टिकर्म च ।
कुलाचारोऽपि कर्त्तव्य इति शास्त्रविदो विदुः ॥
देशाचार स्तथाधर्म इति प्राह पराशरः ।
अयं हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ।
क्लेशभागीच सततं व्याधितोऽल्पायुरेव च ॥
आचारे व्यवहारे च दुराचारो विपर्य्ययः ।
नृणामाचारतो धर्मः स्यादधर्मो विपर्य्ययात् ॥
आचारवन्तो मनुजा लभन्ते आयुश्चवित्तं च सुतांश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोकं मत्रापि विद्वज्जनपूजिताश्च ।
वेदाः सहाङ्गैः सपुराणविद्याशास्त्राणि वेद्यानि च तद्विहीनम् ॥
कुर्युर्नवैतानि च संस्मृतानि नरं पवित्रं प्रवदन्ति वेदाः ।
येऽधीतवेदाः क्रियया विहीना जीवन्ति वेदैर्मनुजाधमास्तान् ॥
वेदास्त्यजेयुर्निधनस्य काले नीडं शकुन्ता इव जातपक्षाः ।
आचारहीननरदेहगताश्च वेदाः
शोचन्ति किन्नु कृतवन्त इतिस्म चित्ते ॥
यं नो भवेद्वपुषि चास्य शुभप्रहीणे
स्थानन्त्विदं भवबन्धननाशकर्त्तृ ।
कर्त्तव्यं यत्नतः शौचं शौचमूला द्विजातयः ।
शौचाचारविहीनानां सर्वाः स्युर्निष्फलाः क्रियाः ।
तत्त्वद्धि द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
विष्मूत्रशोधनं बाह्यं चित्तशुद्धिस्तथान्तरम् ।

गन्धलेपापयनं च स्यां शौचमाहुर्मनीषिणः॥
मृद्भिरद्भिर्निलयस्य तत्कर्त्तव्यं द्विजातिभिः।
भावशुद्धिपरं शौच माहुराभ्यन्तरं बुधाः॥
यस्य पुंसस्तु यच्छौचं शौचैस्तप्यं किमन्यकैः।
वाङ्मनोजलशौचानि यशः सदा द्विजन्मनाम्॥
त्रिभिः शौचैरुपेतो यः स सर्गो नात्र संशयः।
स्त्रियं रिरंसुर्द्रविणं जिहीर्षुर्वधङ्किकीर्षुर्मनुजः परस्य।
विवत्तरत्यन्तमवाच्यवाचं कथं स शुद्धिं समुपैति शौचात्॥
किं निकामस्य नारीभिः किं गतापोश्च समं द्विजैः।
यतेन्द्रियस्य किं शौचैर्निष्फलं। मुर्खदानवत्॥
न गतिर्मूर्खदानेन न तारोऽप्सुनि चाश्मनः।
तस्मात्तस्य न दातव्यं सह दात्रा स मज्जति॥
यथा भस्म तथा मूर्खो विद्वान् प्रज्वलिताग्निवत्।
दातव्यश्च समिद्धाग्नौ जुहुयात्को नु भस्मनि॥
यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत् तथा।
शूद्रेण सह सम्बेषं मूर्खे दानं विवर्जयेत्॥
ग्रहीता च तार्वाद्विद्वान् तद्दाता रोहको यथा।
आत्मानं तारयेत्तश्च नदीं वैतरणीं द्विजः॥
यो मूर्खो विशदाचारः षट्कर्माभिरतः सदा।
स नयन् स्वर्गमात्मानं दातांश्चैव न पीड़येत्॥
न विद्यते तयोर्यस्य षटद्वन्द्व प्रतिग्रहम्।
षट्दानः स दातारमात्मान मप्यधो नयन्॥
हेम भूमिं तिलान् गाश्च अविद्वान् हि ददाति यः।

भस्मीभवति सोऽज्ञाय दातुः स्यान्निष्फलं भवेत् ॥
तस्मादृदति नो दद्यादल्पयोऽपि प्रतिग्रहम् ।
विषतत्त्वापरिज्ञानी विषेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्य मर्चितम् ।
विद्वद्भिर्नत्वपात्रे तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
अविद्वांसस्तान् गृह्णीयु र्गृह्णन्त स्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे मातंगं द्विमुखीं गवाम् ।
नवश्राद्धान्नभक्तश्च वर्ज्या निर्माल्यवद्द्विजाः ॥
एते यान्यन्वतामिस्रं यावच्चानुसपञ्चकम् ।
विप्राश्च वल्कैश्च रवैश्च जाता
ष्वाच येषाञ्च मुनिश्च गाश्च ।
कालेन पात्रे विधिना प्रदत्तः
प्राप्नोति लोकान् नियमेन तद्यतम् ॥
वेदविद्वान् सदाचारः सदा वसति सन्निधौ ;
भोजने चैव दाने च वर्जनीयो न सन्ततैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो ह्यतिक्रमेत् ।
भोजने चैव दाने च हिनस्त्यासप्तमं कुलम् ॥
प्रच्छन्नोऽपि निराचाराः प्रतिवासिनिवासिनः ।
सम्यक् भव्यक्रव्याभ्यां संभाव्यौ वत्सवादिषु ॥
प्रतिग्रहाभावे प्राप्नो कृच्छ्रापदि ।

विप्रोऽश्नन् प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक् ॥
गुर्वादियोषवर्गार्थं देवाद्यर्थञ्च सर्वतः।
एत्साद्द्यात् द्विजाग्र्यन् अत्यर्थमात्मनोऽपि च ॥
दधिक्षीराज्यमांसानि गन्धपुष्पाम्बुमत्स्यकान्।
शय्यासनाशनं शाकं प्रत्याख्यं न हि कश्चित् ॥
अपि दुष्कृतकर्मभ्यः समादद्याददयाचिता।
पतितादिसदस्येभ्यः प्रतिग्राह्यमसंशयम् ॥
शक्तः प्रतिगृह्णीतु यो वेदज्ञस्तम् सद्गतम्।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितः ॥
प्रतिग्रहमृणां वापि याचितं यो न यच्छति।
तत्कोटिगुणग्रस्तोऽसौ स्तौ दासत्वमृच्छति ॥
दाता च यः स्मरेद्दानं प्रतिग्राही न पात्यते।
उभौ तौ नरकं यातो दाता चैव प्रतिग्रही ॥
अपात्रस्य हि यद्दत्तं दान स्वल्पमपि द्विजः।
गृहीता तत्क्षणाद्याति भस्मत्वञ्चाप्यवारितः ॥
वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति।
प्रत्यक्षलिङ्गमेवेह दातृयाचकयो रतः।
दातृहस्तो भवेदूर्द्धं मधस्तिष्ठेत्प्रतिग्रही।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचितः ॥
सूनादीनाञ्चतुर्वर्णां तथा निन्दितभूयते।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यधः ॥
पुष्टो दशगुणं पूर्वात् सुनिश्चयमवाधिकात्।
वैश्यो निषिद्धनृपतिप्रतिग्राही परे क्रमात् ॥

भस्मीभवति सोऽज्ञाय दातुः स्यान्निष्फलं भवेत् ॥
तस्माद्ददाति नो दद्यादल्पमेवोऽपि प्रतिग्रहम् ।
विषतत्त्वापरिज्ञानी विषेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्यमर्चितम् ।
विद्वद्भिर्न त्वपात्रे तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
सद्विप्रास्तान्न गृह्णीयुर्गृह्णन्तस्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे सागरे द्विमुखीं गजम् ।
नवश्राद्धान्नभक्तश्च वर्ज्या निर्माल्यवद्द्विजाः ॥
एते यान्त्यन्धतामिस्रं यावच्चानुसहस्रकम् ।
विप्रांश्च वह्नेश्च रवेश्च जातां
दृष्ट्वा च येषां मुनयश्च गाथ ।
काले च पात्रे विधिना प्रदत्तः
प्राप्नोति लोको नियमेन तदुक्तम् ॥
वेदविद्वान् सदाचारः सदा वसति सन्निधौ ।
भोजने चैव दाने च वर्जनीयो न सत्तमैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो व्यतिक्रमेत् ।
भोजने चैव दाने च हिनस्त्यासप्तमं कुलम् ॥
अहृच्चापि निराचाराः प्रतिवासिनिवासिनः ।
अन्यत्र हव्यकव्याभ्यां भोज्यास्ते बान्धवादिषु ॥
प्रकृतिग्रहाभावे प्रासाशा बृहदापदि ।

विप्रोऽस्मन् प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक्॥
गुर्वादिभ्योऽश्ववर्गार्थिं दैवाद्यर्थञ्च सर्वतः।
एत्नादद्यात् द्विजाग्र्न भत्यर्थमात्मनोऽपि च॥
दधिक्षीराज्यमांसानि गन्धपुष्पाम्बुमत्स्यकान्।
शय्यासनाशन शाक प्रत्यक्षं यं नहि क्वचित्॥
अपि दुष्कृतकर्मभ्यः समादद्यादयाचिता।
पतितादिस्तदन्येभ्यः प्रतिग्राह्यमसशयम्॥
शक्तः प्रतिगृह्णीतु यो वेदङ्न्तान् मत्रतम्।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितः॥
प्रतिग्रहसमर्थं वापि याचित यो न यच्छति।
तत्कोटिगुणग्रस्तोऽसौ भर्ता दासत्वमृच्छति॥
दाता च यः स्मरेद्दानं प्रतिग्राही न पात्यते।
उभौ तौ नरकं यातो दाता चैव प्रतिग्रही॥
अपात्रस्य हि यद्दत्त दान स्वल्पमपि द्विजः।
गृहीता तत्क्षणाद्याति भस्मत्वञ्चाप्यवाग्नि॥
वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति।
प्रत्यक्षलिङ्गमेवेह दातृयाचकयो रतः।
दातृहस्तो भवेदूर्द्ध्वं मधस्तिष्ठेत्प्रतिग्रही।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचितः॥
सूनादीनाञ्चतुर्वर्णां तथा निन्दितभूयते।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यधः॥
पुष्टो दशगुणं पूर्वात् सुनिश्चयमथाधिक्रत्।
वैश्यो निषिद्धशूद्रपतिप्रतिग्राही परे क्रमात्॥

परपाकं वृथामांसं देवानामविदूषितम् ।
अनुपाककृतं चैव तथा मांसञ्च नादिकम् ॥
न भोक्तव्यमभोज्यान्न कन्दमूलादिकञ्च यत् ।
न पातव्यं न पेयञ्च द्विजैरन्नं न गर्हितम् ॥
मद्यमुक्तं सदा तथाच्छनैर्धर्मं समाचरेत् ।
यमान् स नियमान् कुर्यान्नार्हस्थं व्रतमाचरेत् ॥
मातृपितृउपाध्यायान् गुरून्स्वमान् सदार्चयेत् ।
एतान् श्रेष्ठान् तथाचार्यान्नित्यं विप्रोऽभिवादयेत् ॥
दमञ्च सर्वदा कुर्य्याद्दानं दद्याच्च सर्वदा ।
दयाञ्च सर्वदा कुर्य्यात्तद्दिना नरकाश्रयः ॥
दाम्यन् स सर्वदात्मानं दाम्ययन्नु सदा द्विजः ।
दयध्वमिति वै वेदा श्रुतिर्वाजसनेयिकी ॥
दत्त्रिधा कारकं कुर्य्यात् स्तनयित्नुर्ध्वनिर्न्तरिव ।
ददद्वेति दम दानं दयामिति च शिक्षयेत ॥
रसारसे समा ग्राह्या दया अपि च नान्यथा ।
न रसैर्लवणं ग्राह्यं समतां हीनतोऽपि वा ।
तिला अपि समा देया दस्मात् अपिच नान्यथा ।
दुषीद्या न न दन्तं ग्र युरेतन्मनोपिणः ॥
विक्रय व्यपदेशेन दुग्धदध्यादिसर्पिषम् ।
प्रयुपः न तिरस्कुर्य्यादुपासा नावधीरयेत् ॥
न निन्द्याश्च समाभ्यर्च्यान्न विक्रीणीत गर्हितान् ।
अदेयान्न नैव दद्यादन्याज्यानि न वै त्यजेत् ॥
अभाष्य नैव भाषेत्र शोपाङ्गाञ्याश्च न क्षिपेत् ।

न संवदेच्च पितताद्यैः पतिताद्यैर्न संविशेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च ।
मतिं शूद्रस्य यो दद्याद्येचैनं पर्युपासते ॥
न किञ्चित्तस्य चाज्ञेयं व्रतादिनियमादिकम् ।
आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्नं निषिद्धस्थं स्वप्यान्नाप्यरात्रिषु ।
वेदविद्याविज्ञानानि विक्रीणीत न कर्हिचित् ॥
नापात्यानि स्माद्यानि भुवुक्तिश्चान्वयेऽपि च ।
नाऽपश्येत् स्वपाणिभ्यां न च कण्डूतिकृद्भवेत् ॥
पादुका न च पालाशा न वृक्षादिनिकृन्तनम् ॥
नोत्सृज्यं ष्ठीवनाद्यञ्च कदाचिद्वै गवादिषु ।
पद्भ्यां स्पृश्यौ गवाघ्रातो नोच्छिष्टो न च तद्गतिः ॥
न लङ्घ्या वस्त्रतन्त्वादि वाय्वग्न्योर्नान्तरा गतिः ।
न द्वयोर्विप्रयोर्नाग्न्योः सौरभेयोः पतिस्त्रियोः ॥
न विप्राग्न्योर्विप्रपिण्डौ नो ग्राह्यौ विष्णुतार्क्ष्ययोः ।
सौरभेयोर्जलाग्न्योश्च माहेयीजलयोरपि ॥
भानुर्व्योमादिकानान्तु न कुर्य्यादन्तरागतिम् ।
भोजनादिषु नासक्तां पश्येन्न विगतांशुकाः ॥
न गच्छेत् स्त्रीं रजोयुक्तां न च तया सहाश्नुयात् ।
उत्तरीयं विना नैव न नग्नो न शयीत च ॥
न गेहे चैव मार्गादौ न निषिद्धककुम्मुखः ।
नापगाङ्गेयचर्यादि नर्चाविष्ठा गृहान्तिके ॥
अतिकालातियानि च शुभमिच्छन्विसर्जयेत् ।

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः।
तेषामन्नं न भोक्तव्यन्तथोपपत्तिवेश्मनः॥
यो वद्धस्य कदर्यस्य भुञ्जीतान्नं द्विजाधमः।
तद्भक्षणादद्धवत्स स्यान्मृतो विट्शूकरो भवेत्॥
योऽन्नं वार्धुषिकस्यापि जातापत्यादिकस्य च।
अन्यस्यापि निषिद्धस्य सोऽनन्तं नरकं व्रजेत्॥
पाणिगृहीतभार्यायां सत्यां यस्तु नराधमः।
शूद्रीहस्तेन यो भुङ्क्ते पतितः स सदैव तु॥
त्यक्ता ये नोढभार्यास्तु त्यक्तः स पितृदैवतैः।
देवादित्यक्तः पापीयान् शूद्रादप्यधिकः स्मृतः॥
यः शूद्रीं भजते नित्यं शूद्री तु गृहमेधिनी।
वर्जितः पितृदेवैस्तु रौरवं यात्यसौ द्विजः॥
यः शूद्रायां स्वयं जातो हन्तव्यः सोऽपि तत्पुनः।
अन्यस्याश्च पुनः सोऽपि किन्तस्य प्रेत्य चिन्तनम्॥
सर्वान् भुञ्जीत नरकान् विंशति त्वेकवर्जितान्।
रौरवादीन् क्रमेणैव पापिष्ठो यावदन्तरम्॥
हेमन्तशिशिरत्वोश्च प्रोष्ठपद्या परस्य च।
पञ्चत्वपरपक्षेव कार्य्या साग्निभिरष्टका॥
हेमन्तशिशिरे चैका एकैकाथ तथापरा।
प्रोष्ठपद्या द्विजास्तिस्रो ह्यष्टका इति केचन॥
दर्शश्च पौर्णमासश्च तथैवाग्रहयणद्वयम्।
चतुर्मासीव्रतान्येव कार्याणि साग्निकैर्द्विजैः॥
अनूचानः शतं कुर्युः सदैव व्रतचारिणः।

अग्निहोत्ररता नित्यं मातापित्रादिपूजकाः ॥
प्रतिग्रहनिवृत्ताश्च जपहोमपरायणाः ।
वृत्तवन्तश्च ये विप्राः स्नातकास्ते प्रकीर्त्तिताः ॥
सङ्क्रान्तिरर्कवारश्च व्यतीपातो युगादयः ।
शुभर्क्षदिनयोगाश्च कार्य्या साग्निभिरष्टका ॥
न शूद्राय भिक्षां नैतत् कर्त्तव्यं कर्म च द्विजैः ।
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥
लब्ध्वा यज्ञाय स विप्रो न दद्याद्यज्ञकर्मणि ।
स वायसोऽथ वा गृध्रः काकोवाथ प्रजायते ॥
यिनोऽखहत्तिर्विप्रस्य तथा चैक।हिकाशनः ।
त्र्यहाहिकाशनो वा स्यात् कुम्भीकुशलधान्यकः ॥
पूर्वं पूर्वतरः श्रेयानिपा सद्भिः प्रकीर्त्तितः ।
सोमपः स्यात्त्रिवर्षान्नं ततएव क्रतुसमागतः ॥
सोमेष्टिपशुयज्ञञ्च कुर्य्याच्च प्रतिवासरम् ।
इष्टिर्वैश्वानरी यातु कर्त्तुं तदसम्भवेत् ॥
सत्यामर्थस्य सम्पत्तौ न कुर्य्याद्दीनदक्षिणाम् ।
तत् कृतञ्च भवेद्व्यर्थं प्राप्नुयात्पशुयोनिताम् ॥
श्राद्धपूतञ्च दातव्यं पात्रे दानं समर्चितम् ।
यार्चितोऽपि हि दातव्यं पूतं स्वश्रद्धया धनम् ॥
शूद्रान्नं ब्राह्मणोऽश्नन्वै मासं मासार्द्धमेव च ।
तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः ॥
आशूद्रस्यादशूद्रान्नो मृतश्चैवापजायते ।
द्वादश दश वाष्टौ च स्पशूकरपुष्कलः ॥

उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः।
जुह्वन्वापि जपन्वापि गतिमूर्ध्वां न विन्दति॥
अमृत ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिर स्मृतम्॥
तस्माच्छूद्रं न भिक्षेरन्यज्ञार्थं सद्द्विजातयः।
श्मशानमिव तच्छूद्रस्तस्मात्तं परिवर्जयेत्॥
कणानामथ वा भिक्षां कुर्याच्चेद्वृत्तिकर्शितः।
स शूद्राणां गृहे कुर्वन् न तत्पापेन लिप्यते॥
विशुद्धान्वयसञ्जातो निवृत्तो मांसमद्ययोः।
द्विजभक्तिर्वणिग्वृत्तिस्तच्छूद्रः संप्रकीर्तितः॥
उदक्यास्पृष्टसंस्पृष्टं वीक्षितं वाप्युदक्यया।
स्वस्पृष्टं शकुनात्स्पृष्टं प्रयत्नेन विवर्जयेत्॥
उच्छिष्टञ्च पदा स्पृष्टं शुक्तञ्च पतितेक्षितम्।
पर्युषतञ्च विट्कस्थं केशकीटाद्युपाहृतम्।
पत्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत्॥
नाश्नीरन्नेतदशन सामिषन्ते द्विजातयः।
शूद्राणामपि भोज्यान्नाः स्युर्दासनापितादयः॥
सस्नेहमशनभोज्यं चिरस्थमपि यद्भवेत्।
अनक्ता अपि भोज्याः स्युः सद्यश्चेता यवादयः॥
गर्भिण्या वत्ससुभयांगवादे वर्जयेत्पयः।
स्त्रीणामेकशफोष्ट्रीणां तथारण्यकमाविकम्॥
प्रसूता ब्राह्मणी गौश्च महिष्याजा तथैव च।
दशरात्रेण शुद्ध्येत भूमिष्ठ च नवञ्जलम्॥

शाकादिकञ्च विट्जातं कवचानि च वर्जयेत् ।
मांसं कीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत् ॥
एवं ये क्रव्यमश्नन्ति तथा विष्ठाभुजश्च ये ।
शुकटिट्टिभदात्यूहान् कपोतपिकसारिकाः ॥
सेधाद्यान् पञ्च षट् पञ्च सिंहाद्यान्मत्स्यकांश्च षट् ।
धर्मशास्त्रोदितानद्यात् सर्वाकाराश्च वर्जयेत् ॥
भक्ष्यप्राणां त्यजेन् मांसं श्राद्धयज्ञोत्सवेष्वपि ।
कृत्वा च विधिवत् श्राद्धं नाद्यमतिथिनामिषम् ॥
यदैवाश्ययमस्पत्तिस्तदैवामन्त्रयेद्द्विजान् ।
कृत्वाच विधिवत् श्राद्धं पश्चात् तत् स्वयमश्नुयात् ॥
नाद्यादविधिना मांसं सत्यदिष्टेऽपि धर्मवित् ।
भक्षयन्नरके तिष्ठेत्पशुर्लोमसमाः समाः ।
स्टस्थोऽपि हि यो नाद्यात्पिशितन्तु कदाचन ॥
स साक्षान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः ।
न स्वयञ्च पशुं हन्यात्कारादिकं उपस्थिते ॥
क्रव्याद्यैः सारमेयाद्यैर्हतं म्टगादिमाहरेत् ।
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः ॥
समर्थो यस्य यत् स्यादन्न दत्त्वा तु देहिनाम् ।
सतामिति निरानन्दो लोमहृष्टं निगद्यते ।
अन्नादेरपि भक्ष्यस्य स्नेहमद्यामिषस्य च ॥
महाफलानि हन्तौ स्यात् प्रवृत्तिः स्वर्गसाधना ।
एकोऽष्टशतमश्वेन यजेत पशुना द्विजः ।
अन्योन्यं मांसमश्नाति स्वर्गप्राप्तिस्तयोः समाः ॥

हेम राजन्! शङ्खकस्य ताम्रस्य वैणवस्य च।
चर्मणोरज्जुवस्त्राणां शुद्धिर्जायेत वारिणा॥
तद्वादियज्ञपात्राणां धान्यानां वायसामपि।
अन्येषां जयरूपाणां प्रोक्षणाच्छुद्धिरिष्यते॥
मार्जनान्मखपात्राणां हस्तेन मखकर्मणि।
अम्भोगे यत्र कैकर्णैः शुद्धेतां कौशिकाविके॥
श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च॥
क्षौमयानि पुनः पाकैः चौमाणि सितसर्षपैः।
शुद्धेत कारुहस्तस्य पण्य यत् स्यात्प्रसारितम्॥
भैक्षञ्च प्रक्षोणाच्छुद्धात् पिष्टिः माचान्वयस्य तु।
स्त्रीमुखञ्च सदा शुद्धं भूमिर्लेपविवर्जिता।
अपरा दहनाद्यैश्च घटं मार्जनलेपनैः॥
द्रवद्रव्याणि शुध्यन्ति वह्निना प्लावनेन च।
क्रव्यादाद्यात् हृत मांसं सर्वदा शुचि कीर्तितम्॥
तृप्तिकृत् सौरभेयाय स्वभावात् सङ्कटा गतिः।
वदन्ति सूरयो वारि पवित्रमिति सर्वदा॥
गौर्वह्निश्च वनच्छाया जलप्रस्त्रो वसुन्धरा।
विप्रुषो मक्षिकानाञ्च न दुष्यन्ति कदाचन॥
श्रुतिः प्रस्थापने वत्सः अन्यासां मुखतस्तथा।
न तु गौर्मुखतो मेध्या न कस्य मुखजा मलाः॥
सोमभास्करयो र्भाभिः पथशुद्धिः प्रकीर्तिता।
आशाधरौ धूमध्वजौ सस्नेहा[illegible]नादनु॥
न दुष्येद्बहुजः प्राह बालहस्त[illegible]मुखम्।
स्नात्वा पीत्वा च भुक्त्वा च सुप्त्वा नत्वा तथैव च॥

गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु ।
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ।
पद्माश्मलोहफलकाष्ठ चर्ममाण्डस्य तोयैः ॥
स्वयमेव शौचात् पुंसां निशास्वप्नानि निःसहायम् ।
न स्त्रीणाञ्च सदा शुद्धिर्विहिता च सतामपि ॥
नभसः पञ्चदश्यां तु पञ्चम्यां च तथापरे ।
नभसस्य चतुर्दश्या मुपाकर्म यथोदितम् ॥
तद्विदः केचिदिच्छन्ति नभसः श्रवणेन तु ।
हस्तेन वाथ पञ्चम्या मध्यायान्ते वदन्ति तत ॥
यत्र शाखोपवीतः स्याद्ब्रह्मचारी द्विजोत्तम ।
तत्सावा विहित तस्य उपाकर्मादि कीर्त्तने ॥
अतो वेदाधिकारत्व वेदपाठस्य कीर्त्तने ।
अनुपाकृतविप्राद्वैर्वेदाध्ययन दुष्कृतम् ॥

मुञ्जोपवीताजिन दण्डकाष्ठम्
त्याज्य न तस्माद्व्रतचारिणा मपि ।
अकृत्स्नकर्माश्रमलोपपापम्
संस्कारमन्य न पुनर्नयेयु ॥

ओषधीनां तु सद्भावे स्वशाखाविहितस्य तत ।
रोहिण्या च सहस्यस्य उपाकर्माणि कुर्वते ॥
न भवेदनुपाकर्म ब्राह्मणः स्नातको व्रती ।
कर्मच्युतो भवेद्व्रात्यो व्रात्योऽसंस्कृतिकः शुचिः ॥
तथा ततस्य दनध्यायो स्तनगर्वादिषु त्यजत् ।
सितकादिस्वशाखात मधीत्यावश्यकः शुचिः ॥

अष्टकासु तथाष्टम्यां पौर्णमास्यां शशिक्षये ।
मन्वादौ युगपत्त्याद्ये विन्दुपातात् क्षयेऽपि च ॥
चतुर्मासि द्वितीयायां चन्द्रद्‌ध्यामहर्निशम् ।
अहोरात्रे नृपे संस्थे वर्तिनि श्रोत्रिये यतौ ।
अत त्र्यहमनध्याय मिच्छन्ति चापरे द्व्यहम् ॥
अशौचसूतकान्ते च यावच्छुद्धिस्तयोर्भवेत् ।
देशान्तरगते प्रेते श्रुतेऽपि स्यादहर्निशम् ॥
गुर्वादौ वा नृपत्यादौ इति वाशिष्ठजोऽब्रवीत् ।
प्रतिग्रहो त्वहोरात्रं भुक्त्वा श्राद्धकमेव च ॥
तज्ज्ञा ब्रूयुरनध्याय मनुमन्धा वहर्निशम् ।
यश्रादौ च रहो भोक्ता रहोरात्रा विदुर्बुधाः ।
अकाले वा हते वृष्टिवज्रिदायेच सप्तमाः ।
सामेषु दुःखितानाञ्च स्वरादीनाञ्च नि स्वने ॥
पतितश्वावशूद्रान्त्यसन्निधाने न कीर्त्तयेत् ।
आत्मन्येव शुचौ देशो विद्युत्स्तनितरोहिते ॥
वधे च कलहे देशविप्लवे लोकविग्रहे ।
पांशुवर्षेऽम्बुमध्ये च दिग्दाहग्रामदाहयोः ॥
नीहारे च भवेद्विद्वान् सन्ध्ययोरुभयोरपि ।
धावंश्च न पठेद्विद्वान् पूतिगन्धेतयैव च ।
विशिष्टेचागते गेहे गात्रात्रक्तनिर्गमे तथा ॥
भोजनायोपविष्टस्य क्षुधितस्याद्र पाणिनः ।
वान्ते चान्ते तथा जीर्णे महापात्रेऽतिमारुते ॥
राजा हर्षौ च यात्रादौ आरूढस्य तथा द्विजः ।
एतानन्यांश्च तत्कालान् अनाध्यायान्विदुर्बुधाः ॥

यो वर्जयेदनध्यायान्वेदाध्ययनकृद्द्विजः ।
भवन्ति तस्य सफला वेदाः मोक्षफलप्रदाः ॥
येच तेषु पठन्त्यज्ञाः पाठलोभेन लोभिताः ।
न शास्त्रता भवेद्विद्या निष्फला च तथा द्विजः ॥
यः पठेद्विधिवद्वेदान् तत्परतीन्द्रियसंयमी ।
ब्रह्मत्वमिह लोकेऽपि ऐश्वर्यसुखभाक् भवेत् ॥
जनानां शृण्वतां यत्र मार्गे गच्छन् पठेद्द्विजः ।
निष्फलास्तस्य वेदाश्च वेदविद्दोषभाक् ॥
यः पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ।
मङ्क्षीणग्राममध्ये तु सम्भवेत् वेदविक्रयी ॥
ये स्वाध्यायानधीयीरन् अनध्यायेषु लोभतः ।
वज्ररूपेण ते मन्त्रा स्तेषां देहे व्यवस्थिताः ॥
नाक्रामेदमरादीनां छाया तथा परस्त्रियः ।
वान्तष्ठीवनविण्मूत्र कार्पासास्थिकपालिकाम् ॥
तानश्चैताः स्वयं निप्राङ्गणान् स्पृशेयु द्विजाः ।
प्रियं कामं च मा काङ्क्षेन्नमृगेन् मर्म कस्यचित् ॥
नित्यं वर्त्तेत चाज्ञस्य धर्मञ्च नित्यमर्जयेत् ॥
न किञ्चित्ताडयेद्धीमान् सुतं शिष्यञ्च ताडयेत् ।
ताडयेन्नाभितोऽधस्तान्नत्तानन्यत्र ताडयेत् ॥
आचारेण सदा विद्वान् वर्त्तते यो यतेन्द्रियः ।
स ब्रह्म परमाप्नोति चारत्रोऽमुत्र चेह च ॥

आचारमूलं श्रुतिशास्त्रजन्यं आचारनाशाच्च तदुक्तकृत्यम् ।
आचारपर्णानि हि वाक्तिसंगात् वाचारपुष्पाणि यशोधनानि ।
आचारवृक्षस्य फलं हि साक्षात्साक्षात् सुस्वादुरसञ्च मुक्तिः ।

ादनन्तं फलदन्तु तत्त्वमाचारमेवाश्रय यत्नपूर्वम् ॥
र्मशास्त्रे विहिताश्च केचिद्धर्मा द्विजाग्र्येऽपि तेच सर्वे ।
ेन कार्या पितृदेवभक्तैः श्राद्धानि कार्याख्यथ तानि वच्मि ॥
न धर्मा गृहमेधिविप्रै प्रीतेन वाचा वपुषा च कार्यः ।
ः प्रजा श्री र्भुवि पूजितत्व तस्माल्लभन्ते दिवि देवभोगान् ॥
इति श्रीबृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां धर्म-
ायां चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः।

अथ सूर्य्येन्दुग्रहणे भच्छायायुग्मणामक्रमे ।
व्यतीपातविष्वत् कृष्णपक्षपातार्द्धलब्धिषु ॥
अष्टका नयने द्वे च श्राद्धं प्रति यदा रुचिः ।
पुण्यः श्राद्धस्य कालोऽयमृषिभिः परिकीर्तितः ॥
युगादिषु च कर्त्तव्यं मन्वन्तरादिकेऽपि च ।
श्राद्धकालोऽह्यय प्रोक्तो मन्वाद्यैर्धर्मकर्तृभिः ॥
नवान्न नवोदकञ्चैव नवछन्न तथागृहम् ।
नाद्येऽद्य वेषु चेहन्ते पितरो हि यमास्तत्र ॥
काणः पौनर्भवो रोगी पिशुनो वृद्धिजीवकः ।
कृतघ्नो मत्सरी क्रूरो मितभुक् कुनखोऽगुदः ॥
विच्छिन्नजननश्चित्रीश्यावदन्तावकीर्णिनः ।
हीनाङ्गश्चातिरिक्ताङ्गो विक्लबो परनिन्दकः ॥
क्लीबोऽभिशस्तवाक् दुष्टभृतकाध्यापकस्तथा ।
कन्यादूषी वणिग्वृत्तिर्विनग्नः सोमविक्रयी ॥

भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकः।
पित्रादित्यागकृत्तेन वृषलो पतितस्तु॥
अनुक्तवृत्तिरन्यातः परिपूर्वापतिस्तथा।
अजापालो माहिषिकः कर्मदुष्टाश्च निन्दिताः॥
योऽसत्प्रतिग्रहग्राही यश्च नित्य प्रतिग्रही।
यश्च स्तूनकदूतौच पितृश्राद्धेषु वर्जिताः॥
एकादशाहे भुञ्जन्त शूद्रान्नरसमयुताः।
गुरुतल्पगो ब्रह्मघ्नो यश्च चापपति गृहे॥
प्रेतस्पृक् चैव निर्णिक्ता चापयाचकयाचकौ।
बकाकविडालाश्च शूद्रवृत्तिश्च गर्हितः॥
वाक्दुष्टबालदमको नित्यमप्रियवाक्कया।
आमक्ता दूरनकामादावर्तिवाक् चैव दूषितः॥
निराचाराश्च ये विप्रा पितृमातृविवर्जिताः।
विद्वांसोऽपि हि नाभ्यर्च्याः पितृश्राद्धेषु सत्तमैः॥
न वेदैः केवलैर्वापि तपसा केवलेन च।
सद्वृत्तैः किन्तु तैः प्रोक्ताः पावता ब्राह्मणास्य च॥
यत्र वेदास्तपो यत्र यत्र वृत्तं द्विजाग्रजे।
पितृश्राद्धेषु तं यत्नात्स्वधान्विरं समर्चयेत्॥
वेदशास्त्रार्थविच्छान्त शुचिर्धर्ममना सदा।
गायत्री ब्रह्मचिन्ताकृत् पितृश्राद्धे स पावनः॥
रथन्तर वृहज्ज्येष्ठः सामवित् त्रिसुपर्णकः।
त्रिमधुश्चापि यो विप्रः पितृश्राद्धेषु पूजितः॥
मातामहश्च दौहित्रो भागिनेयोऽथ मातुलः।
मातृस्वस्त्रीयश्च तथा तथा मातुलजोऽपि वा॥

जामाता श्वशुरो बन्धुर्भार्याभ्राता च तत्सुतः।
सुवृत्ताश्च सदाचारा ये ते श्राद्धेषु पावनाः॥
ऋत्विग्गुरूरुपाध्याय आचार्यः श्रोत्रियोऽपरः।
एते श्राद्धेषु वै पूज्याः ज्ञातिसम्बन्धिबान्धवाः॥
अग्निहोत्री च यो विप्र आवसथ्याग्निकोऽपि च।
पितृमातृपरावर्त्ती भोक्तार्थौ हव्यकव्ययोः॥
कृष्येकवृत्तिजीवी यो भोक्ता मात्रादिकेषु च।
षट्कर्मनिरतः पूज्यो हव्यकव्ये सदैव हि॥
चवृत्तिः सदाचारो मातादिभक्तितत्परः।
शुचिः षट्कर्मयुक्तश्च हव्यकव्येषु पूजितः॥
युगानुरूपतो यस्तु विद्याचारादिसंयुतः।
स पूज्योऽनभिशस्तः स षट्कर्मनिरतो द्विज॥
इत्युक्तगुणसम्पन्नान् ब्राह्मणान् पूर्ववासरे।
निमन्त्रयेत सद्भक्त्या नियोगस्थानपूर्वकम्॥
सव्येन देवतार्थन्तु पित्रर्थमपसव्यवान्।
ततस्तै र्यतितव्य स्यादुक्त पितृरतद्विजैः॥
जितेन्द्रियैस्तु भाव्यं स्यादहोरात्रमतन्द्रितैः।
तस्मिन्नहनि वा प्रात र्यत्र श्राद्धमवस्थितम्॥
निमन्त्रयेत तान् भक्त्या तैश्च भाव्यं जितेन्द्रियैः।
विप्रोरूपाश्वपृष्ठस्थाः पितृमातामहादयः॥
भुञ्जन्ति क्रमशः श्राद्धे तथा पिण्डांशिनोऽपि च।
निमन्त्रित द्विज श्राद्धे न शयीत स्त्रिया सह॥
अध्वानं न च वै यायान्न ब्रूयादनृतन्तथा।
नाधीयीत दिवास्वाप न कुर्वीत न सञ्वदेत्॥

न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकम्।
प्राङ्मुखौ दैविकौ विप्रौ पित्र्यास्त्रय उदङ्मुखाः॥
एकैकौ वो भयत्र स्याद्दनसम्पत्ताविति क्रमः।
पात्रं वा दैविकं कृत्वा विप्र एकस्तु पैतृके॥
इति वा निर्वपेत् श्राद्धं निर्धनश्चान्यदाचरेत्।
गत्वारण्यमसमानुष्य ऊर्द्धबाहुर्विरौत्यदः॥
निरन्नो निर्धनो देवाः पितरो ह्यानृणाद्धरु।

न मेऽस्ति वित्तं न धनं न भार्या
श्राद्धं कथं वः पितरः करोमि।
वने प्रविश्येह कृतं मयोच्चै-
र्भुजाद्वयं वर्त्मनि मारुतस्य॥
श्राद्धार्थमेतद्भवतां प्रदत्तम्
मत्तो दयध्वं पितृदेवताश्च।
अस्या वचोऽच्चिप्र भुजावतस्ता
दिवा च रात्रिं समुपोष्य तिष्ठेत्॥
भवेत्तु चैतेन कृतेन तथा
कथा न मुक्तः पितृदेवतानाम्।
निर्वित्तनिर्भाग्य निराश्रयाणाम्
श्राद्धस्य मार्गः प्रथितो मुनीन्द्रैः॥

ख्यातं मया वदित्वा वः पितरः श्राद्धदेवताः।
श्राद्धार्थस्य विमुक्तोऽहं मन्तव्यं पितरो मया॥
कृतोपवासः स तस्मात् श्राद्धर्णाद्विप्रमुच्यते।
एतैश्चापि न यः कुर्य्यात् पितरस्तेन वै हताः॥
सम्पत्तावथ पात्राणामेकैकस्य त्रयस्त्रयः।

पित्रादौ ब्राह्मणाः प्रोक्ताश्चत्वारो वैश्वदेविके ॥
द्वौ वापि दैविके विप्रौ चैकैकोवा न दोषभाक्।
स्यान्मातामहिकेऽप्येवमेकोऽपि वैश्वदेविके॥
नतु वैकतु सर्वेषां आश्वलायनमतः स्थितम्।
पितृणामर्चयेद्विप्रो मन्त्रपिण्डनिदर्शनम् ॥
न मातामहिकं श्राद्धं श्रौतसुक्तान्तु साग्निके।
अनग्निकस्य तत् कुर्य्यादिति केचिन्मतं विदुः॥
साग्निकस्यापि कार्यं स्यात् श्राद्धं मातामह द्विजैः।
षट् दैवत्यमितीत्येकेऽप्येके र पार्वणाद्वयम् ॥
अपुत्रस्य पितृव्यस्य तत्पुत्रैर्भ्रातृजो भवेत्।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाः॥
पार्वणान्तेन कार्य्यंस्यात् पुत्रवत् भ्रातृजेन तु।
पितृस्थाने तु तं कृत्वा शेषे पूर्ववदुच्चरेत्॥
श्राद्धं पत्यापि कार्यं स्यात् अपुत्रा यास्तु योषितः।
तस्यापि हि तया कार्यमेतत्व हि तयोर्यतः॥
भ्रातृर्ज्येष्ठस्य कुर्वीत कार्यं ज्येष्ठोऽनुजस्य च।
देवहीनन्तु तत् कुर्यात् इति धर्मविदो विदुः॥
पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।
पुत्राभावेतु पत्नीच तदभावे सहोदरः॥
पित्रादीनान्तु कर्तव्यं समीलन्ते यतस्त्वमी।
नावह्येयास्तु ते सर्वे कृते तु स्यान्महत् फलम्॥
पितामहस्य चान्येषां यस्य जीवन्नवा द्विजः।
प्रत्यक्षास्तेऽपि वै पूज्याः संस्थित्यर्थं यतश्च तत्॥
विद्यमानस्त्रयाणां स्यात् प्रत्यक्षः पूज्य एव सः।

गौतमस्य मतं ह्येतदिति वाशिष्ठजोऽब्रवीत् ॥
विद्यमाने तु पितरि श्राद्धं कर्त्तुमुपस्थितः ।
पितृवत्पितृपित्रादेः कुर्य्याच्छ्राद्धमसंशयम् ॥
पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः ।
तत्पितुर्निर्वपत्यस्मात् तृतीयं तु पितुः पितुः ॥
अतएव द्विजः पुत्रीमुद्वहेन्न कथञ्चन ।
उद्वोढ़ः पुत्रः पुत्रोऽसौ पुत्रोऽसौ मातुरेव हि ॥
पुत्तस्य दुहितुश्चैव समौ तौ धार्मिकौ पथि ।
अर्थकृतौच विप्रोक्तौ तुल्यौ तौ शक्रजोऽब्रवीत् ॥
सुतस्य यथा पितुः श्राद्धस्तथा मातामहस्यच ।
पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥
दौहित्रः पार्वणश्राद्धे कालस्तु कुतपस्तथा ।
तथा कृष्णास्तिला विद्वान् इति शास्त्रविदो विदुः ॥
काम्यमभ्युदयश्चैव द्विविधं पार्वणं स्मृतम् ।
तथाकामन्तु काम्यं स्याद् वृद्धावभ्युदये स्मृतः ॥
क्षत्रियायास्तु यो जातो वैश्यायान्तु तथा सुतः ।
ब्राह्मणस्य पितुस्तौ तु निर्वपेतां द्विजाग्रवत् ॥
क्षत्रियस्य सुतश्चैव तथा वैश्यसुतोऽपि च ।
एतावेन द्विजास्तेभ्यः श्राद्धद्वयञ्च निर्वपेत् ॥
आमान्नेन तु शूद्रस्य कुर्वीत द्विजपूजनम् ।
कृत्वा श्राद्धन्तु निर्वप्य सजातीनाशयेत्तथा ॥
ये शूद्रा भोजयेद्विप्रान् स्वतपाकान्नेन तु ।
सर्वदिवसकृतं ताभिर्लिप्यते स कुजोऽब्रवीत् ॥
शूद्रपाकं द्विजेभ्यश्च विभवान्यो ददाति यः ।

कृमीभवति पाताले स युगानेकविंशतिः ॥
भोजितेन तु विप्रेण यत्पापं तस्य जायते ।
तेनासौ लिप्यते मूढो यः शूद्रो भोजयेद्द्विजान् ॥
योऽद्य मन्ये द्विजाभ्यान्तु शूद्राहृतेन भोजयेत् ।
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभम् ॥
यत्किञ्चिद्दुष्कृतं विप्रे पूर्वं कृतन्तु तिष्ठति ।
तेनासौ लिप्यते पापी यः शूद्रो भोजयेद्द्विजान् ।
शूद्रोच्छिष्टन्तु यो भुङ्क्ते मन्ये विप्रोऽधमः स तु ॥
कृमित्वं याति विष्ठाया युगानि ह्येकविंशतिः ।
शूद्रोच्छिष्टन्तु भुञ्जानः पञ्चाहानि द्विजोत्तमः ॥
स तद्विष्ठाकृमित्वं हि प्राप्नोति हि शतं समाः ।
अतो न भोजयेद्विप्रान्नवदिन्नैव पूजयेत् ॥
शूद्रान्नं भोजनाद्युक्त इति पाराशरोऽब्रवीत् ।
अग्नौकरणपिण्डांश्च कुर्यादामाशनेन तु ॥
घृतदधिमध्वाज्यैः सम्पृक्त शर्करैरपि ।
यवाद्यसंस्कृतान्नेन होमादि चरु निर्वपेत् ॥
जलेन पयसा वापि नग्वादस्राद्धकृत्तथा ।
नामान्नेन द्विजैः कार्यं कदाचिदपि सद्द्विजैः ॥
अर्पयित्वा द्विजौ कस्तु तथापि पाकमाश्रयेत् ।
न कुर्य्यात् परपाकेनं नैकपाकेन तु द्वयम् ॥
नैकश्राद्धे द्वय कुर्यान्नच कुर्यात् परान्नभुक् ।
पित्रादीनां सगोत्रा ये तथा मातामहस्य च ॥
तेषामेकेन पाकेन कार्यं पिण्डविवर्जितम् ।
केचित् सपिण्डमिच्छन्ति सम गोत्रतथा तथा ॥

पिता मातामहश्चास्य स्याद्भिन्नगोत्रतया तथा ।
पृथक् कर्तुमशक्यं स्यादर्थपात्राद्यसम्भवे ॥
अवश्यन्तत्र कर्तव्यमेकदैवमशाश्येत् ।
येषां नोद्वाहसंस्कारो ह्यन्यसंस्कारसंस्कृताः ॥
सङ्कल्पितं भवेत्तेषां श्राद्धं कार्यं च योऽहनि ।
केचित्सपिण्डमिच्छन्ति ब्राह्म संस्कारवत्तथा ॥
आद्यो हि ब्राह्मसंस्कारस्तस्मात् पिण्डान् प्रदीयते ।
सर्वेष्वपि निमित्तेषु कर्तव्यं पिण्डसंयुतम् ॥
पितृणां त्रिविधा यस्माद्भृतिः प्रोक्ता मुनीश्वरैः ।
वैश्वदेवः सदा कार्यो श्राद्धे च समुपस्थिते ॥
पाकशुद्ध्यर्थमेवैतत् पूर्वमेतद्विधीयते ।
वैश्वदेवोऽग्रतश्चैव श्राद्धकाले विशेषतः ॥
पाकशुद्धिस्तु विज्ञेया भुक्तोच्छिष्टं तु वर्जयेत् ।
सप्रामे पार्वणश्राद्धे एकोद्दिष्टे तथैव च ॥
अग्रतो वैश्वदेवं हि पश्चादेकादशेऽहनि ।
एकोद्दिष्टविशेषेण प्रागेव ह्यग्निपूजनम् ॥
कालस्तु कुतपस्तस्य रौहिणः पार्वणस्य च ।
वामतश्चासनन्दद्यात् पितृकार्येषु सत्तमः ॥
दैविके दक्षिणन्तद्वदिति पाराशरोऽब्रवीत् ।
आसने चासनन्दद्याद्वामे वा दक्षिणेऽपि वा ॥
पितृकार्येषु वामन्तु दैवे कर्मणि दक्षिणम् ।
पितृश्राद्धेषु यो दद्याद्दक्षिणं दर्भमासनम् ॥
नाश्नन्ति पितरस्तस्य माध्याभि वत्सराणि षट् ।
तस्माद्वामतो वा पात्रे पितृकर्मणि चासनम् ॥

दैविके दक्षिणा तद्वदिति वाशिष्ठजोऽब्रवीत्।
कुत्र काले च कर्त्तव्यं श्राद्धन्तत् पैतृकं प्रभो॥
वदस्व निश्चयन्तत्र विवदन्त्यपरेऽत्र तु।
पञ्चदशमुहूर्त्तो हस्तत्पागर्द्धं दिनं स्मृतम्॥
अपरार्धं स्मृता रात्रि स्तन्मध्य: कुतपोमत:।
यथा यथा च ह्रस्वत्वं पुंस: स्यानेनसो भवेत्॥
तथा तथा पवित्रं स्यात्काल: श्राद्धार्चनादिषु।
छायेयं पुरुषस्यैनस्तत्पादाभो भवेदध:॥
आधानश्राद्धदानादे: स कालोऽक्षयकृत् स्मृत:।
अयुतं तु मुहूर्त्तानामर्द्धं ह्यष्टदशाधिकम्॥
त्रिंशद्भिस्तै रहोरात्रमिति माध्यन्दिनी श्रुति:
दिवसस्याष्टमे भागे मन्दीभवति भास्करे॥
स काल: कुतपो ज्ञेयस्तत्र दत्तन्तु चाक्षयम्।
मध्याह्ने तु गते सूर्य्ये न पूर्व्वे नच पश्चिमे॥
तुल्याग्रसंस्थिते चैव सोऽष्टमो भाग उच्यते।
मध्याह्नाच्चलितो भानु: किञ्चिन्मन्दगतिर्भवेत्॥
स कालो रौहिणो नाम पितृणा दत्तमक्षयम्।
तस्मात् सर्वप्रयत्नेन रौहिणन्तु न लङ्घयेत्॥
अकाले विधिना दत्तं न देवपितृगामि तत्।
अष्टवृद्धि र्भवेदत्र तत्राब्दमुभयात्मकम्॥
श्राद्धन्तत्र च कुर्वीत मासयो रुभयोरपि।
पिण्डवर्ज्यं मसक्रान्ते संक्रान्ते पिण्डसयुतम्॥
षष्टिभिर्दिवसैर्मास स्त्रिंशद्भि: पक्ष उच्यते।
संक्रान्तिरहित: पक्ष [illegible] र्य्यं विपिण्डकम्॥

सिनीवालीमतिक्रम्य यदा संक्रमते रविः।
युक्तसाधारणैर्मासैः स काल उत्तरोभवेत् ॥
सङ्क्रान्तिवर्जितः काल समलः पापसम्भवः।
रक्षसाभागधेयोऽसौ उत्सवादिविवर्जितः ॥
तत्र नैमित्तिक कार्य्यं श्राद्ध पिण्डविवर्जितम्।
नित्यं तु सततं कार्य्य मिति पाराशरोऽब्रवीत् ॥
ग्रहाभिर्गणितैर्यत् स्यात् तत्कार्यं यत्र सर्व्वदा।
तिथिनक्षत्रयोगश्च जातकर्मादिकाश्च ये ॥
नैमित्तिकाश्च दैवान्ये कार्य्यास्तेऽपि मलिम्लुचे।
तीर्थस्नानं गजच्छाया हिमुखीं गोप्रदानवत् ॥
मलिम्लुचेऽपि कर्त्तव्यं सपिण्डीकरणन्तथा।
आग्रहणा ममावास्या मष्टकाग्रहसक्रमम् ॥
अधिमासेऽपि कार्य्यं स्यादिति पाराशरो ऽब्रवीत्।
नित्यञ्च नित्यशः कार्यमिष्टकामाश्च वर्जयेत् ॥
वार्धिक पिण्डवर्जं स्यादन्यस्मिन् पिण्डसयुतम्।
इष्टिराग्रहण श्राद्ध मन्वाद्यायेञ्च सर्वदा ॥
कर्त्तव्यं सततं विप्रैरिष्टिकामांश्च वर्जयेत्।
दैवे कर्मणि संप्राप्ते तिथौ यत्रोदितो रविः ॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥
त्रृद्धिमद्दिवसे कार्यं श्राद्धमाभ्युदिक द्विज.।
क्षीणमानदिने कार्यं श्राद्धं विद्धम्। क्षयादिकम् ॥
मित्रे चैव सर्गोत्रे च पितृमातृसहोदरे।
आमनश्चैव दातव्य भोक्तव्या एवमेव ते ॥
ब्राह्मणं न सगोत्रन्तु पूजयेत् पितृकर्मणि।

नोपतिष्ठन्ति तन्नेषां किन्तु स्यान्न निराशता ॥
स्वगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः।
हतास्तु पितरस्तेन न भुक्तमुपतिष्ठति ॥
श्राद्धं कुर्वन् द्विजोऽज्ञानात् स्वगोत्रं यस्तु भोजयेत्।
स लुप्त पितृदेवः सन्नरकं प्रतिपद्यते ॥
तस्मान्न गोत्रियां विप्र भोजयेद्विधिपूर्वकम्।
ज्ञातिमात्रो न भोज्यस्तु उच्छ्रितैस्तु द्विजोत्तमैः ॥
दक्षिणाप्रवणे देशे श्राद्धं कुर्य्यात्तु पैतृकम्।
पितॄणां पावनो देशः स प्रोक्तोऽक्षयतृप्तिकृत् ॥
देशे काले च पात्रे च विधिना हविषा च यत्।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ॥
तैजसानि तु पात्राणि ह्यर्घाय भोजनाय च।
कृत्वापाणा मयान्येके अपराण्यपरे विदुः ॥
पलाशपद्मपत्राणि अनिषिद्धानि यानि च।
तानि श्राद्धेषु कार्याणि पितृदेवहितानि च ॥
वृद्धिश्राद्धेषु मन्यन्ते मृण्मयानि तु केन च।
शौनकस्य मतं ह्येतत् वृथाकार्य्यन्तु मृण्मयम् ॥
एकद्रव्याणि कार्याणि पात्राणि भोजनार्थयोः।
त्रीणि पैतृककार्य्याणि भेदमेकत्र वर्जयेत् ॥
एकस्य वैश्वदेवानि.पैतृकाण्येकवस्तुनः।
इतिवा तानि कार्य्याणि भेदमेकत्र वर्जयेत् ॥
वटाश्वत्थार्कपत्रेषु न भुञ्जीत कदाचन।
न जातिकुसुमैर्विद्वान् विल्व पत्रैश्च नार्चयेत् ॥
सुरभीनागकर्णाद्यैः करवीरैश्च नारकैः।

बिल्वपत्रैरचयेद्विद्वन् पितृश्राद्धेषु गर्हितैः ॥
तद्गुप्तानैः कृतः श्राद्धं निराशैः पितृभिर्गतैः ॥
सर्वाण्यपि च पुष्पाणि निषिद्धान्यपराणि तु ॥
वर्जयेत् पितृश्राद्धेषु केतकीकुसुमानि च।
गोरम्भाभृङ्गराजाद्यै र्मल्लिकाकुब्जकैरपि ॥
समर्चयेत् द्विजान् श्राद्धे हव्यकव्यादिते द्विजः।
न दद्यान्मुग्ुल श्राद्धे द्विजानां पितृदैवते ॥
धूपाभावे तु कर्तव्य घृतधूपं द्विजोत्तमः।
कुङ्कुमाद्य चन्दनञ्च देय गन्धविमिश्रितम् ॥
ऊर्द्धञ्च तिलक कुर्यान्न कुर्याच्च त्रिपुण्ड्रकम्।
ऊर्द्धञ्च तिलक कुर्याद्दैवे पित्रे च कर्मणि ॥
निराशाः पितरो यान्ति यस्तु कुर्य्यात् त्रिपुण्ड्रकम्।
पवित्रं यदि वा दर्भं करे कृत्वा द्विजाम्बरः ॥
समालभेत् द्विजानञ्च स्त्र् श्राद्ध मसुर भवेत्।
गन्धाश्च विविधा देया. कर्पूरागुरुमिश्रिताः ॥
शक्त्या वस्त्राणि देयानि तदभावे च निष्क्रयम्।
दीपश्च सर्पिषा देय स्तिलतैलेन वा पुनः ॥
न काष्ठतैलैरन्यैस्तु कदाचित् सार्पपात्रमैः।
देशधर्मं समाश्रित्य वंशधर्मं तथापरे ॥
स्मरयः श्राद्धमिच्छन्ति पार्वणञ्च चयान्यपि।
स्त्रीणामपि पृथक् श्राद्धं न मन्यन्ते स्वधर्मतः ॥
मातामहस्वगोत्रे वा मातुस्ते तु सपिण्डताम्।
मातामहस्यमहेच्छन्ति मातुस्तेऽपि सपिण्डताम् ॥
स्त्रीणां स्त्रीगोत्रमस्वन्वात् पुंगोत्रे वा नृणां यतः।

सपिण्डीकरणं काले श्राद्धद्वयमुपस्थितम् ॥
देवाद्यं प्रथमं कुर्यात् पितॄणां तदनन्तरम् ।
देवाद्यं पार्वणं प्रोक्तं प्रेतस्याद्य मथापरम् ॥
एकतस्य ततः पश्चात् कृत्वा विप्रांश्च भोजयेत् ।
पितॄणा मर्घ्यपात्राणि प्रेतपात्र मथापरम् ॥
प्रेतपात्रन्तु तत् कृत्वा पितृपात्रेषु योजयेत् ।
ये समाना इति द्वाभ्यां पूर्ववच्छेष माचरेत् ॥
सपिण्डीकरणं यस्य कृतं न स्याद्द्विजन्मनः ।
आदेय तस्य देयं स्यात् पिण्डमेकं तु निर्वपेत् ॥
सपिण्डीकरणाच्चैतत् क्रियाश्चैव चयाह्निकम् ।
एकादशाह्निकं कृत्वा योहि मासि च मासिके ॥
वर्षे वर्षे च कर्तव्यं मृतेऽहनिच तत् पुनः ।
नापुत्रस्य सपिण्डत्व केचिदिच्छन्ति तद्विदः ॥
विशेषतोऽनपत्यस्य सत्यप्यत्राधिकारिणी ।
विद्यमानः पिता यस्य स चेद्यदि विपद्यते ॥
तदन्तरा सपिण्डत्वं वदन्ति श्राद्धवादिनः ।
आभ्युदयिकसम्पत्तौ चर्चा प्रागेव कारयेत् ॥
कुर्यात् परिजनेनैतत् स्वयं वापि द्विजोत्तमः ॥
सन्यसन् सर्वकर्माणि तत् आदाय च तद्दिने ।
अग्निदाप्यदिनश्चैके केचिन्मृतदिनं विदुः ॥
विदेशस्ते मृताहस्तु शुक्लेवासि तु द्वादशी ।
संग्रामे संस्थितानाञ्च प्रेतपक्षे शशिक्षये ॥
अग्निसर्पादि मृत्यूनां षण्मासोपरि सत्क्रिया ।
तेषां पार्वण मेवोक्तं चयाहेऽपि च सत्तमैः ॥

चन्द्रक्षया नाशक संयुगेषु यः प्रेतपक्षे क्षतवत्मदण्डः
सपिण्डतानन्तर माब्दिकानां भवन्ति तेषा मिह पार्वणानि ॥
क्षयाह्निकादि कार्याणि ब्रूयुर्धर्मविदो जनाः ।
अब्दादूर्ध्वक्षरन्त्ये के कृत्वा च वैष्णवीं बलीम् ॥
विष्णुचैन विना नार्वाक् प्रदत्तमुपतिष्ठति ।
विद्युता हस्तपातेन श्रृङ्गेन महिषेण वा ॥
इत्यादिकेन क्षत्यः स्यात् यत्र तिथौ च तत्र च ।
तन्निमित्तस्य इष्ट्यर्थं मासि मासि क्षयाह्निकम् ॥
कर्त्तव्यमवधौ याव त्ततः कुर्वीत सत्क्रियाम् ।
अनाथक क्षतानाञ्च क्षयाहेऽपि च पार्वणम् ।
मध्यासवर्त्ति मन्यन्ते केचि द्विदु रवैदिकम् ॥
एकोद्दिष्ट मदैव स्यादेकार्थकपवित्रकम् ।
आवाहनाग्नौ करण हीन तदपमव्यवत् ॥
पूर्वोत्तर प्रवे देशे श्राद्धं स्यान्मातृ पूर्वकम् ।
घृतपीतादिपिष्टेन चर्चित भूतले च तत् ॥
उद्दिष्टक्रतुकालस्य तत् प्रागेव विधीयते ।
आभ्युदयिक दैवानि पूर्वाह्णे स्यु रिति स्मृतिः ॥
तिलाक्षतोदकै र्युक्ताः न्यासनादिप्रदक्षिणम् ।
परि स्तुत्यादि दृष्टेन कृत्वा च शान्तिपूर्वकम् ॥
व्रीहयो यवगोधूमाः क्षयताश्चरताः स्मृताः ।
अन्नामलकैः पिण्डान् दधिकर्कन्धु मिश्रितैः ॥
नान्दीमुखेभ्यो देवेभ्योः प्रदक्षिण कुशासनम् ।
पितृभ्य स्तन्मुखेभ्यश्च प्रदक्षिण मिति स्मृतिः ॥
कर्कन्धुभि र्यवैः पुष्पैः शमीपत्रै स्तिलैस्तथा ।

तेभ्योऽर्घ्यः प्रदातव्यः पितृभ्यो देवतैः सह ।
मातामहानामप्येवं षट् दैवत्यं श्रियेद्द्विजः ॥
माङ्गल्यपूर्वकं सर्वं गन्धाद्यपि च धारयेत् ।
तृप्तिस्तत् पितृमातॄणां धूपो देयश्च गुग्गुलः ॥
घृताभिघार धूपो वा यथा स्यात् परिपूर्णता ।
दीपाश्च बहवो देयाः विप्रं प्रति घृतेन च ॥
तैलेन केन ये वापि नवनीतेन चैव हि ।
मालत्या शत पत्रावा मल्लिका कुन्दयो रपि ।
केतक्या पाटलायावा देया श्राद्धे न लोहिताः ॥
वासांसि च यथाशक्त्या दद्यात्तेभ्योऽथ निष्क्रयम् ।
परिपूर्णां तथा तत्स्यात्तयाकार्यं भवेदिति ॥
सुवेष भूषणैः सूत्रसालङ्कारै स्तथान्तरैः ।
कुङ्कुमाद्यनुलिप्ताङ्गै र्भोज्यन्तु ब्राह्मणैः सह ॥
स्त्रियोऽपितु तथा भूता गीतनृत्यादिहर्षिताः ।
दुन्दुभीनादहृष्टाङ्गा मङ्गलध्वनिकारिकाः ॥
सोमसदोऽग्निष्वात्ताश्च तथा बर्हिषदोऽपि च ।
सोमपाश्च तथा विद्वंस्तथैव च हविर्भुजः ॥
आज्यपाश्च तथा वत्स तथा परे सुकालिनः ।
एते चान्ये च पितरः पूज्याः सर्वे द्विजाग्रजैः ॥
वमवश्च तथा रुद्रा स्तथैवादितिसूनवः ।
देवता अपि यत्रेषु स्वायम्भुवादि कीर्तिताः ॥
एते च पितरो दिव्या स्तथा वैवस्वतादयः ।
ये तत्पौत्राः प्रपौत्राश्च असंख्याः पितरः स्मृताः ॥
एते श्राद्धेषु सन्तर्प्या मुनिचाद्यै द्विजातिभिः ।

सन्तर्पिता इमे सर्वान् प्रीणयन्ति नृणां पितॄन् ॥
प्राक् सङ्केतितांश्च तान् स्नातान् काले समागतान् ।
दत्त्वार्घ्यान् स्नतवत् शौचान् आचान्तानुपवेशयेत् ॥
ये स्पृगन्त्यत स न्येऽङ्घ्रि चाचमन्ति पिबन्ति च ।
तेषाञ्च जायते शुद्धिराचमन्त्यङ्घ्जाहि ते ।
सर्वाणि स्वानि कार्याणि कार्यच्छिद्राणि चात्मनः ॥
तैराचान्तै र्भवेच्छुद्धिरशुचिस्त्वन्यथा भवेत् ।
व्याहृय वैष्णवान् मन्त्रान् स्मृत्वा च सर्वमातरम् ॥
शान्तस्वान्तौ द्विजान् पृष्टे करिष्ये श्राद्धमित्यथ ।
करवे करवाणीति पृष्ट्वा ब्रूयु र्द्विजास्ततः ॥
अनुज्ञायै वचो ह्येतत् कुरुष्व यत् स्नतं कुरु ।
ततो दर्भासनं कृत्वा देवेभ्यः समयं पुनः ॥
दक्षिणं जानुमन्वास्य दक्षिणाञ्च तथासनम् ।
पात्रद्वय मतोऽर्घ्यार्थं तैजसञ्चैकवस्तुजम् ॥
आसन सपवित्रं तत् समभ्यर्च्य विधानतः ।
प्राङ्मुखोऽमरतीर्थेषु गन्धाद्यर्घ्यादिकं नयेत् ॥
यवोऽसीति यवांस्तत्र दद्यात् पुष्पाणि चन्दनम् ।

यवोऽसि पुण्यमिति मन्त्रितोऽसि
मम स्वधान्य प्रभुरस्यमुत्र ।
सदेवमनुष्य पितृगणस्य तृप्त्यै
क्षिमावतीर्णोऽसि हितोऽसि पुंसाम् ॥
उत्पादपूर्वक मिमानस्त्वनेन वेधा
भूय. प्रसन्न मनसा तदुपासितः सन् ।

चिक्षेप तान् सलिलनाथ प्रसिच्यताश्च-
तेनाश्रुता वरुणा दैवतका बभूवुः॥
आनीयमान्विधिरिमान्वरुणस्य लोकान्
अन्वप्रभूनभूवि यवान् वसुलोक दृष्ट्रैः।
तत्पिष्ट पक्कहविषा पितृदेवतानाम्
दृष्ट्रा वसन्ति दिवि दानवराक्षएव॥

ततः सव्य करं न्यस्त्वा विप्रो दक्षिणजानुभिः।
देवानावाहयिष्येव मिति वाच मुदीरयेत्॥
आवाहये त्यनुज्ञा च विश्वे देवाः स आगतः।
विश्वे देवा शृणुतेममिति मन्त्रद्वयं पठेत्।
सामिन सहराज्ञेति केचित्पठन्त्यदोऽपि च॥
व्याहृत्य मन्त्रमावाह्य हस्ते दत्त्वा पवित्रकम्॥
अर्चयेत्त द्विज पुष्पैः दद्यादर्घं करे पुनः।
विश्वेभ्य स्वेष देवेभ्यमुष्य मर्घ्यं प्रदीयते॥
या दिव्या इति मन्त्रेण पाणौ विप्रस्य तं क्षिपेत्।
अपसव्य मतः कृत्वा निर्वर्त्य वैश्वदैवकम्॥
आपो भूमिगताः केचिदादित्येत्यभिमन्त्र्यच।
पुमस्ताभिकयाभ्यास्य कुर्वन्ति मुखमार्जनम्॥
उदक गन्धधूपांश्च वासांसि चन्दनं स्रजः।
दत्त्वा आपः च सोद्धृता दद्यात् पितृ कुशासनम्।
सोदकान् द्विगुणीभूतान् सतिलान् सकुशानपि॥
गोकर्णमात्रकान् साग्रान् प्रदद्याद्वामपार्श्वतः।
चतुर्थ्यन्तं सगोत्रञ्च पितृनाम च शर्मवत्॥
उच्चार्य्य परयोस्तद्वदिदं तुभ्यं कुशासनम्।

पितर्थ्यं मर्घ्यं पात्राणि सपूज्य दक्षिणामुखः ॥
तिलोऽसीत्येतदुच्चार्य यत्रस्थाने तिलान् क्षिपेत् ।
भूलग्नः सव्यजानुः सन् पितृतीर्थे नचात्वरः ।
पितृध्यानमनाः कुर्यात् पितृकार्य्यमशेषतः ॥
आवाहयिष्ये पित्रादीन् अनुआवाहयेति च ।
उगन्ता स्वेति उदीर्य यथायन्तु न इत्यपि ॥
अन्येत्वपहता असुरा इत्यादि च पठन्ति हि ।
अन्य विघ्नस्यपोहार्थं वक्तव्य मिति केचन ॥
प्राग्व हिप्रार्चनं कार्यं प्राग्वदर्घ्यं प्रसेवनम् ।
प्राग्वमन्त्रं समुच्चार्य्य प्राग्वच्च मुखमार्जनम् ॥

एतं तिलान् विधिना प्रणिलोकृतम्
प्राक्तृत्य भोजन हिते न शुभाय धन्यः ।
क्षिप्वा मलानि पुरुषस्यच तर्पणाद्यै
यें घ्नन्ति तेषु भुवि सत्सु कुतो भयं स्यात् ॥
तिलोऽसि चन्द्रामृतदैवतोऽसि
हितोऽस्यशेषे पितृ देवतानाम् ।
कर्तापि तृप्तिं परमां पितृणा
मुक्तोऽसिते न भवता विधिमन्त्रवोऽसि ॥

अर्घ्यपात्राणि सर्वाणि कृत्वा तान् पाद्यपात्रके ।
पितृभ्यः स्थान मसीतिन्युब्जं कुर्य्यादधश्च तत् ॥
यस्तु हरेद्विप्राना दर्घ्यपात्रम् पैतृकम् ।
सहि श्राद्ध मर्भाज्य स्यात् क्रव्यैः पितृगणै र्गतैः ॥
आश्रित्य प्रथमं पात्रं तिष्ठन्ति पितरो नृणाम् ।
श्राद्धे तस्मान्न त द्विद्वानुद्धरेत् प्रथम सुधीः ।

वाचयेत् परिपूर्णन्तु वासोदत्त्वा विधानतः।
अस्त्वेतु परिपूर्णन्तु ब्रूयुरेते द्विजातयः॥
ससर्पिः पात्र मादाय सपिधानं विधानतः।
नत्वा सर्वान् द्विजान् पृच्छेत्करिष्येऽग्नाविति द्विजः॥
कुरुष्वेति त्वनुज्ञाता जुहोत्यग्नौ ततः पुनः।
भोजने पितृविप्राणा मितिमन्त्र मुदीरयेत्॥
अग्निशब्दं चतुर्थ्येकवचनान्त समुच्चरेत्।
कव्यवाहनशब्दं च सोमं पितृमदित्यपि॥
पङ्क्तिमूर्द्धान मेवात्र पृच्छेदितिह केचन।
पितृश्राद्धप्रदानत्वात् मात्रस्त्वे नाथवा पुनः।
तृतीयां मनसा दद्यात् यमाय त्वेतवा पुनः।
तुष्णीं यत्र तु होमादौ प्रजापतिस्तु तत्रतु॥
अह वाक् तस्मिन् वाक् मन्त्रादौ मून्मनोगिरः।
अहव्यवाद्यते वाणी अमुष्याग्नेः प्रजापतेः॥
अग्नावाहुतयः प्रोक्तास्तिस्रएव मनीषिभिः।
अग्निवद्विप्रपात्रेषु पश्चात्तज्जु हुयाद्द्विजः॥
अग्नौकरण शेषन्तु पितृपात्रेषु दापयेत्।
प्रतिपाद्य पितृणां तु दद्याद्वै वैश्वदेविके॥
यश्चाग्नौकरणं दद्यात् पितृविप्रकरेषु च।
तेनोच्छेषित मेतत् स्यात्समाप्तिस्तावतैव तु॥
पितरः कव्यवक्त्राश्च वह्निवक्त्राश्च देवताः।
अतः पाणौ न तद्देयं देयं पात्रे कुशान्विते।
वैश्वदेविकविप्राणां पात्रे वा यदिवा करे॥
अनग्निक स्तु तद्द दद्यात् प्रथम वैश्व देविके।

कृतशेषमशेषाणां पात्रे दद्याद् द्विजोत्तमः ।
पृच्छेत्सर्वांश्च यत् कृत्य सामान्येन द्विजोत्तमान् ॥
दत्त्वान्ये करणञ्चान्यं विप्राणां तृप्तिकृद्धविः ।
परिवेश्य मिति ब्रूयु स्ततोविधिरनन्तरः ॥
प्रागग्नौ करणं दद्यात् अन्यत्दत्त्वा च तृप्तिकृत्
एकीकृतं तु भुञ्जानाः प्रीणयन्तु नृणां पितॄन् ॥
परिवेश्य हविः सर्वं तदर्थं यच्च वै स्मृतम् ।
अभिमन्त्र्य मतः पात्रमपोशनप्रदानवत् ॥
अन्नपूर्णस्य पात्रस्य कर्त्तव्य मभिमन्त्रणम् ।
आपो दत्त्वा तु सकल्पमेष श्राद्धविधिर्वरः ॥
वर्जितानि न देयानि पितृप्रीतिं विजानतः ।
हविष्याणि प्रदेयानि वक्ष्यमाणानि वर्जयेत् ॥
निष्पावा राजमाषाश्च कुलत्थ कोरदूषकान् ।
मसूर मितपाकञ्च पुष्पकं शाणमर्कटाः ॥
आढकास्तिलमिद्धार्थाः वस्त्रान्निम्बधमान्यके ।
पिण्याकं परिदग्धा च मथितञ्च विवर्जयेत् ॥
नापि नीरस निर्गन्ध करञ्ज सर्वशाककम् ।
अप्रोक्षित च यत्किञ्चित् पर्युषितञ्च वर्जयेत् ॥
लोहितान् वृक्षनिर्यासान् प्रत्यक्ष लवणानि च ।
कृताः कृष्णतिला वर्णाः नर्वाः पालाण्डु जातयः ॥
कृष्ण जीरकमश्वागन्धलवणानि च विवर्जयेत् ।
कुम्भिकेषु कपालाङ्काः कट्फल तण्डुलीयकम् ॥
नीलकाच समच्छत्रा शोभाञ्जन कुसुम्भिकाः ।
कोविदार करञ्जौ च सुसुखामलकं तथा ॥

कूष्माण्डं गौरतुन्ताक वृहत्याश्च फलानि च।
करीरफलपुष्पाणि विडङ्गमरिचानि च।
जम्बारिका सुजम्बीरा सुकवी वीजपुरिकाः॥
तुम्बरलावूनि पिप्पल्यः पटोलं पिण्डमूलकम्।
मसूराञ्जनपुष्प च श्राद्धे दत्त्वा पतत्यधः॥
विपक्कुष्माण्त आम मन्यच्च चिरमस्थितम्।
नित्यश्च छेऽपि वर्ज्यं स्याद्विट्दराह्चकोरयोः।
स्वायम्भुवादिभिः सर्वै र्मुनिभि र्धर्मदर्शिभिः।
निषिद्धानि न देयानि पितृणा संहतानि च॥
केन किञ्चिदपरेण किञ्चित् किञ्चिन्न किञ्चित्परमस्तु सद्भिः।
श्राद्धे निषिद्धं त्वगनादि विद्वन्। सर्वं पितृणा नतु किञ्च देयम्॥
गैरिनिड्कूलवणादिभिः सुपाकस्य शुद्धिर्भवतीह यस्तु।
द्वीजपरान्मरिचादियोगात् सिद्धं प्रदेयं नतु दुष्यतीह॥
श्राद्धन्तु यस्य द्विजदीयमान पित्रादिकस्येह भवेन्मनुष्यैः।
यदि श्रुतस्येह मनस्यभीष्टमासीत् पुरा यस्य तदेव देयम्॥
ानुस्तु यस्मान् मनसोऽभिलाष. श्रद्धा भवेत्तत्र तु दीयमाने।
श्राद्धेऽपि देय विधिवत्तदेव तदक्षयञ्चेति इतिप्रवादः॥
आनीतमम्भोनिधिवत्कथञ्चित् तत्पाणिदत्तं भवतीह विद्वन्।
हेमाम्बुनिक्षेपहरिस्मृताभ्या मच्छिद्रतामिति पराशरोक्तिः॥
क्षीरसारैः त्रयखण्डयोगात् शाखाभिधेय भवतीह विद्वन्।
व्यङ्गधूपान् मरिचादियोगात् पाकस्य शुद्धि प्रवदन्ति तज्ज्ञाः॥
व्रीहयो यवगोधुमा मुद्गा माषास्तिला स्तथा।
नीवारश्यामकाद्यन्त मकृष्टसम्भवानि च॥
शर्करागुड़खण्डानि सशुद्धा क्षौद्रमेव च।

पितृश्राद्धे हविर्मुख्यं यदा तदास्य लोभतः ॥
यद्देहिना मत्र शरीरपुष्ट्यै धाता ससर्जाशननाम किञ्चित् ।
तत्सर्वधान्यान्यमितं त्रयादि त्रिधा मुनीन्द्रेण पराशरेण ॥
श्यामाशरांधादिककङ्गुजादि यत्किञ्चदस्मिन् तृणसाररूपम् ।
अरण्यजं वा कृषिसम्भवं वा तस्यन्नदुक्तं त्वशनेन विद्वन् ॥
काण्डाद्भवं यत्त्वशनेषु किञ्चित्पङ्काद्भवं वा स्थलसम्भवं वा ।
यत्तुच्छसारं बहुराजमस्मिन् सर्वाणि धान्यानि च शूकवन्ति ।
तत्सर्वसारं समुदन्तु भक्ष्यं निःशूकसूनान्वितमत्र किञ्चित् ।
आप्यायनं देहभृतां तु सद्य स्तत्प्रोक्तमत्र त्वशनेन सद्भिः ॥
प्रतिस्रुतश्च भुक्तश्च कटु तिक्तश्च यत्तथा ।
केचिद्दूरदेयानि त्वश्वत्थप्रतिरोपिताः ॥
तुण्डीकरान्यलाबूनि लिङ्गाख्यानि तु यानि तु ।
नित्यं श्राद्धेऽप्यदेयं स्यादाह सत्यवतीपतिः ॥
सोङ्कारया वै गायत्र्या दशावर्तितया जलम् ।
पतन्तु तेन तत्प्रोक्तं सर्वमन्नविशुद्धये ॥
शुद्धवत्योऽथ कृष्माण्ड्यः पावमान्यस्तरत्समाः ।
एतेन वारिणैताभि रन्नशोधनमुत्तमम् ॥
तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रदत्तवान् ।
प्रोक्षयेदशनं सर्वम् शूद्रदृष्ट्यादिशुद्धये ॥
परिवेषयेत्समं सर्वं न कार्य्यं पङ्क्तिभेदनम् ।
पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः ।
[illegible]केपङ्क्त्या विषमं ददाति स्नेहाद्भयाद्वा यदि वार्थलाभात् ।
[illegible]देयं दृष्टं ऋषिभिश्च गीतं तद्ब्रह्महत्या मुनयो वदन्ति ॥

देवान् पितॄन् मनुष्यांश्च वह्निमभ्यागतां स्तथा।
अभ्यर्च्य तु न भुञ्जानो वृथापाक इति स्मृतः॥
एतद्वै ब्राह्मणस्यास्ये जुहोमि चामृतेऽमृतम्।
इदं विष्णुरिति ह्येतन्मन्त्रमुच्चार्य्य चापरे॥
द्विजाङ्गुष्ठं च तत्रान्ने निवेशयन्ति तद्विदः।
जप्त्वा व्याहृतिभि र्गायत्रीमधुमतीरिति॥
सङ्कल्पान्न मपोशानं ब्रूयाच्च मधमध्विति।
आपोशन प्रदेयान्नं न तत्सङ्कल्पयेद्द्विजः॥
सङ्कल्पा नरके याति निराशैः पितृभिर्गतैः।
आपोशनो देवपित्रोः पाणौ तिष्ठति यो द्विजः॥
सङ्कल्पं कुरुतेऽज्ञानात् स्वस्तेन पितरो हताः।
जप्त्वाथ वैष्णवान् मन्त्रान् विप्रान् ब्रूयाद्यथासुखम्॥
भुञ्जीरन्वाग्यतास्ते तु पितृदेवहितैषिणः।
अत्युष्णमशनं कार्य्यं वचोवाच्य पितृष्वदः॥
शूद्रश्च शूकरध्वाङ्क्षकुक्कुटानपलापयेत्।
भुञ्जते ब्राह्मणा यावत्तावत् पुण्यं जपेज्जलम्॥
पावमान्यानुवाक्यानि पितृसूक्तानि चैव हि।
ततस्तृप्तान् द्विजान् पृच्छेत्तृप्ताः सन्त्वनुशासनम्॥
तृप्ताः स्मेति द्विजा ब्रूयु स्तदन्नं विकिरेद्भुवि।
सकृत् सकृत्पयो दत्त्वा शेषमन्नं निवेदयेत्॥
यथाज्ञानं तथा कृत्वा पिण्डांस्तदनु निर्वपेत्।
यद्यद्भुक्तं द्विजैरन्नं तत्तदादाय विस्तरः॥
स्थालीपाकतिलोपेतं दक्षिणाभिमुखस्ततः।
अवनिज्यतिलान् दर्भान् पिण्डार्थ मवनीतले॥

तस्मिंश्च निर्वपेत्पिण्डान् गोत्रनामकपूर्वकान्।
यदेकलोकं पितृलोकमायुः प्राप्ता स्वधैवं नरकं नरा ये॥
अग्नौ हुतेन द्विजभोजनेन तृप्यन्ति पिण्डे भुवि ते प्रदत्तैः
यदन्नं लेपरूपन्तु क्रमात्तेषु च निक्षिपेत्।
प्रक्षाल्य सलिलं वारि अवनेजनवत् पुनः॥
निवृत्तानर्चयेत्पिण्डान् पुष्पगन्धानुलेपनैः।
दीपवासप्रदानेन पितृनर्च्य समाहितः॥
वासो वस्त्रदशा दद्याद्विधिवन्मन्त्रपूर्वकम्।
केचिद्दद्यात्सितं लोम केचिन्मत न तद्भवेत्॥
पश्चाद्गार्हपितो यस्तु दद्याल्लोम स्वमश्रुकम्।
तदवश्यं प्रदेयं स्याद्विधिमप्यर्णवाकृते॥
पवित्रं यदि वा दर्भं करात्तत्रैव निक्षिपेत्।
प्रक्षाल्य हस्तावाचम्य प्रोक्षणादिक्रमाचरेत्॥
निर्वपन्त्यपरे पिण्डान् प्रागेव द्विजभोजनात्।
स्वादयेयुः शकुन्तेभ्यः पितृणां तु प्रतन्दरा॥
गतामशनामप्येवं विप्रानाचामयेदथ।
वाच्यातीनृद्विजान् स्वस्ति दद्याभ्रुवाक्षतोदकम्॥
दक्षिणां हेम देशानां पितृणां रजतं तथा।
शक्त्या दत्त्वा स्वधाकारं व्याहरेत आहूतद्विजः॥
तिष्ठन् पिण्डान्तिके ब्रूयाद्वाचयिष्ये स्वधामिति।
वाच्यतामिति विप्रैश्च प्रदद्यात्पूर्वकम्॥
स्वधोच्यतामिति ब्रूयादस्तु स्वधेति तद्वचः।
ऊर्जं वहन्ति उच्चार्य जलं पिण्डेषु सेचयेत्॥
याः काश्चिद्देवताः श्राद्धे विप्रमध्ये न कल्पिताः।

पिण्डदानेन कवयो वंशक्षयं वदन्ति हि ॥
मन्त्रानेषु स्वयोदश्यां न पिण्डान् पातयेन्नरः ।
पातयेन्न मतीत्यस्य प्राह सत्यवतीपतिः ॥
मघाशुक्लत्रयोदश्यां पिण्डनिर्वपणा द्विजः ।
ससन्तानो नैव कुर्य्यादित्यन्ये कवयो विदुः ॥

यः संक्रान्ते भानुदिने च कुर्य्यात्
विशेषणं पारणाक द्विजन्मा ।
पिण्डप्रदानं पितृभेच तद्वत्
ज्येष्ठे प्रपद्ये सुतोऽनुजोवा ॥

पुत्रदा पञ्चमी कर्त्तुस्तथैवैकादशी तिथिः ।
सर्वकामा त्वमावास्या पञ्चम्यर्थं शुभा स्मृता ॥
अन्नक्षीरघृतं क्षौद्रमैक्षवद्राक्षशाकवन् ।
एतैस्तु तर्पितैर्विप्रैस्तर्पिताः पितरो नृणाम् ॥
देशः पर्वच कालश्च हविःपात्रे च शक्तितः ।
पितृदैविकचित्तत्व योगश्चेत् पितृभादिभिः ॥
शौचञ्च पात्रशुद्धाच श्राद्धञ्च परमा यदि ।
अन्नत्वत्तृप्तिकृच्छ्राद्धे एतत् खलु नचामिषे ॥
यत्तु प्राणिवधं कृत्वा मांसेन तर्पयेत् पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्य्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे तथा किञ्चिद्बाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥
सर्वथान्न तथा न स्यात्तदेवामिषमाश्रयेत् ।
ब्राह्मणश्च स्वयं नाद्यात्ततः स्वादिष्टतं यदि ॥
अथान्यत्पापमृत्यूनां शुद्ध्यर्थं श्राद्धमुच्यते ।

कृमिन तेन येषान्तु प्रवृत्तमुपतिष्ठति ॥
दन्तिशृङ्गिगरव्याल निरग्निवन्धनैस्तथा।
विद्युन्निर्घातवृद्धैश्च विप्रैश्च स्वात्मना हताः ॥
प्राणसङ्घातकीटाश्च म्लेच्छैश्चैव हतास्तथा।
पापस्त्यव एवैते शुभगत्यर्थमुच्यते ।
नारायणवलिः कार्य्यो विधानन्तस्य उच्यते।
ऊर्द्ध षण्मासतः कुर्य्यादेक ऊर्ध्वन्तु वत्सरात् ॥
तेषां चैव व्यपोहार्थं कार्य्यो नारायणो वलिः।
धौतवासाः शुचिः स्नात एक दश्यामुपोषितः॥
शुक्लात्तेतु सपूज्य विष्णुमीश यमन्तथा।
नदीतीरं शुचिर्गत्वा प्रदद्याद्दश पिण्डकान् ॥
च दाज्यतिलसंयुक्तान् हविषा दक्षिणामुखः।
अभ्यर्च्य पुष्पधूपाद्यैः पुन्नामगोत्रपूर्वकान् ॥
विष्णुध्यानमनाः कुर्य्यात् ततः स्नानाम्भसि क्षिपेत् ।
निमन्त्रयीत विप्रांश्च पञ्च सप्ताथ वा नव ॥
द्वारभ्यां कुतपे स्नानान्धौतवस्त्रान् समागतान्।
हर्याराधनकृत्त्यया प्रक्षालिताङ्घ्रियुग्मकान् ॥
दक्षिणाप्रवणे देशे शुचिस्तानुपवेशयेत् ।
दैवे द्वौ तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान् द्विजान्॥
आसनावाहनार्घ्यञ्च कुर्यात् पार्वणवद्द्विज।
भोजयेद्भक्ष्यभोज्यैश्च क्षौद्रैश्चवाज्यपायसैः ॥
दृप्तान् कृत्वा ततो विप्रान् तृप्तिञ्चक्षेद्यथाविधि।
भोज्येन तिलमिश्रेण हविष्येन च तान् पुनः ॥
पञ्च पिण्डान् प्रदद्याद्वै दैवरूपमनुस्मरन्।

विणब्रह्मशिवेभ्यश्च त्रीन् पिण्डांश्च यथाक्रमम् ॥
यमाय मानुगायाथ चतुर्थं पिण्डमुत्सृजेत् ।
मृत सञ्चिन्त्य मनसा गोत्रनामकपूर्वकम् ॥
विष्णु स्मृत्वा क्षिपेत् पिण्डं पञ्चमञ्च ततः पुनः ।
दक्षिणाभिमुखस्यैव निर्वप्य पञ्च पिण्डकान् ॥
आचम्य ब्राह्मणान् पश्चात् प्रोक्षणादिकमारभेत् ।
हिरण्येन च वासोभिर्गोभि र्भूम्याच तान् द्विजान् ॥
प्रणम्य शिरसा पश्चाद्विनयेन प्रसादयेत् ।
तिलं दर्भं करे दत्त्वा प्रेतं सम्मृत्य चेतसि ॥
गोत्रपूर्वं क्षिपेत्पाणौ विष्णु बुद्ध्या निवेश्यच ।
बहिर्गत्वा तिलाम्भस्तु तस्माद्दद्यात्समाहितः ॥
मित्रभृत्यैर्निजैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ।
एवं विष्णुमने स्थित्वा यो दद्यात्पापमृत्यवे ॥
समुद्धरन्ति तं प्रेत पराशरवचो यथा ।
सर्वेषां पापमृत्यूनां कार्यो नारायणो बलिः ॥
तस्मादूर्ध्वञ्च तेभ्योहि प्रदत्तमुपतिष्ठते ।
एव श्राद्धैः समस्तान्यः सन्तर्पयति वै पितॄन् ॥
दद्युस्तानुत्तमांस्तस्य पितरस्तर्पिताः परान् ।
विद्यातपोमुखान् पुत्रान् पूज्यत्वमथ योषितः ॥
सौभाग्यैश्वर्यतेजश्च बलं श्रेष्ठमरोगताम् ।
यशःशुचित्वकुप्यानि सिद्धिश्चैवात्मवाञ्छिताम् ॥
यशस्यन्दीर्घमायुश्च तथैवानुमतं मतिम् ।
अथान्यत् किञ्चिद्वक्ष्यामि पितॄणान्तु हिताय वै ॥
कृतेनैव स्वल्पेनापि प्राप्नुवन्ति विधेः फलम् ।

उच्छिष्टस्य विसर्गार्थं विधिस्तात्कालिको हि यः॥
श्राद्धज्ञैर्विहिता यस्मात् पितृगणहितैषिभिः।
आदाय सर्वमुच्छिष्टमवनेजनवद्बुधः॥
तत्रैव भक्षयेद्भूमौ तिलदर्भसमन्वितम्।
नरकेषु गता ये वै अल्पमृत्युमृता मम॥
एतदाप्यायनन्तेषां चिरायैतद्ब्रवीन्मनुः।
करस्य मध्यतो देवाः करपृष्ठे तु राक्षसाः॥
पादस्यालम्भनादौच तस्मात्तन्न प्रदर्शयेत्।
दर्भाश्च स्वयमानेया दक्षिणाग्रवर्णाङ्गवाः॥
तर्पणाद्युच्छिता ये वै इत्याद्यास्च विसर्जयेत्।
न कुशङ्कुशमित्याहुर्दर्भमूल कुशः स्मृतः॥
छिन्नदर्भा इति प्रोक्ता तदग्र कुतपः स्मृतः।
हरिता याज्ञिका दर्भाः पीतकाः पाकयाज्ञिकाः।
समूलाः पितृदैवत्यच्छिन्ना वै वैश्वदेविकाः॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये जनार्दनः।
दर्भाग्रे शङ्करस्तस्मौ दर्भाः देवत्रयान्विताः॥
अहन्येकादे शश्राद्धे प्रतिमास तु वत्सरम्।
प्रतिसम्वत्सरं कार्य्यमेकोद्दिष्टं तु सर्वदा॥
एकस्य प्रथमं श्राद्धं सर्वागब्दाच्च मासिकम्।
प्रतिसम्वत्सरञ्चैव शेषत्रिपुरुष स्मृतम्॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुतैः।
एकोद्दिष्टं प्रकुर्वीत पित्रोरप्यत्र पार्वणम्॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं द्विजैः।
मातापित्रोः पृथक्कार्य्यमेकोद्दिष्ट क्षयाहनि॥

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते।
एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रपातिते॥
पित्रादयस्त्रयो यस्य शस्त्रघातास्त्वनुक्रमात्।
स भूते पार्वणं कुर्य्यात् अष्टकानि पृथक् पृथक्॥
सपिण्डीकरणादूर्ध्वं पितुर्यः प्रपितामहः।
स तु लेपभुगित्येव प्रलुप्तपितृपिण्डतः॥
सपिण्डीकरणादूर्ध्वं कुर्यात् पार्वणवत्सदा।
प्रतिसम्वत्सरं विद्वान् च्छागलेपोविधिः स्मृतः॥
सपिण्डता तु कर्त्तव्या पितुः पुत्रैः पृथक् पृथक्।
स्वाधिकारप्रवृत्तत्वादितरः श्राद्धकर्तृवत्॥
यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं भवेत्।
प्रतिमास तस्य कुर्य्यात् प्रतिसम्वत्सरं तथा॥
अर्वाक् सम्वत्सरात् वृद्धौ पूर्णे सम्वत्सरेऽपि च।
एकपिण्डीकृतानान्तु पृथक्त्वंनोपपद्यते॥
सपिण्डीकरणादूर्ध्वं मृतकृष्णचतुर्दशीम्।
ये सपिण्डीकृतास्तेषां पृथक्त्वं नोपपद्यते॥
पृथक्त्वकरणे तस्य पुनः कार्या सपिण्डता।
स्त्रिय श्वश्र्वा पतिर्मात्रा तया सह सपिण्डयेत्॥
तदभावे पितामह्या तन्मात्रा चापरे विदुः।
नान्यथा तु पितामह्या मातामह्यास्तथापरे॥
उदके पिण्डदानञ्च भर्त्रा सह प्रदीयते।
अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषोऽपिवा॥
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्।
अपुत्राश्च मृता ये च कुमाराः संस्कृता अपि।

स्योना पृथिवीत्यत्र स्कान्दस्य देवता स्मृता ।
इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः ॥
आर्षन्तत्स्वस्य चापुत्र स्त्रिष्टुप्छन्दः प्रकीर्तितम् ।
यस्मिन्नृचेति च्चोत्यत्र यमो वै देवता परा ॥
ऋषिस्तु कुमारो नाम च्छन्दोऽनुष्टुप् स्मरेद्बुधः ।
ब्रह्मजज्ञमित्यत्र च कालो दैवतक मर्हत् ॥
मुनिर्यमानतुर्नाम त्रिष्टुप्छन्दो विधीयते ।
आयाते मेतिच त्वस्या चित्रगुप्तस्तु दैवतम् ॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो त्वयो बुधैः ।
अग्निं दूतमितित्व्यं स्यादग्निर्वै देवता स्मृता ॥
आर्षं मेधातिथिरत्र च्छन्दोगायत्र्यमेव हि ।
अस्यस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत् ॥
मेधातिथिरिहाप्यार्षोऽनुष्टुप्छन्दश्च उच्यते ।
भूतिपृथिव्यन्तरिक्ष मित्यत्र दैवत मीरितः ॥
ऋषिः शातातपः श्रुत्वा छन्दश्चानुष्टु कुर्वुच्यते ।
पुरुषसूक्तस्य दैवत्य पुरुषेच हित बुधैः ॥
आर्षं नारायणस्येह छन्दश्चानुष्टुवित्यपि ।
इन्द्रोपिन्द्रो मरुत्वन्तो मरुत्वान्दैवत मर्हत् ॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि ।
मरुत्वानित्यत्रबुधैः सुरेन्द्रो देवता मता ॥
अत्रापि कश्यपस्यार्षं गायत्र्यच्छन्दएव हि ।
उत्तानपर्णे मित्यत्र इन्द्रो दैवत मुच्यते ॥
आर्षं साङ्ख्यस्य चैवोक्तम् अनुष्टुप्छन्द इत्यपि ।
प्रजापत इति त्वत्र देवता च प्रजापतिः ॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः।
आयं गौरिति ह्यत्र देवता पूजने मता॥
सर्पराजमुनिश्चात्र गायत्र्यं च्छन्द इष्यते।
एष ब्रह्मा ऋत्विज इति ब्रह्मर्षिर्योऽधिदैवतम्॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते।
आत्वन्वन् इन्द्र इदब्रुत् सुरेन्द्रं धर्मणोश्वरः॥
वामदेवोह्यस्य आर्षं गायत्र्यच्छन्द इत्यपि।
जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥
कश्यपस्यार्षमत्रापि च्छन्दोऽनुष्टुप् प्रकीर्तितम्।
आनोनियुद्भिरित्यस्मिन् वायु दैवतमुच्यते॥
आर्षेञ्चात्र वसिष्ठस्य अनुष्टुप्छन्द एव हि।
नमः प्रकाशदैवत्यं मुनिप्रोक्तं प्रजापतिः॥
गायत्र्यं च्छन्दसात्वत्र विनियोगो यथोचितम्।
ईषो उपेति चात्यत्र अश्विनौ दैवते स्मरेत्॥
प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्।
मरुतो यस्य हिष्यस्य मरुद्दैवत मुच्यते॥
गौतमश्च मुनिर्विद्वन्। च्छन्दसः प्रथमं मुने।
दैवत्य मार्षं सहच्छन्दसां यो मत्वा द्विजाग्र्याकु रुते विधानम्
वेदोक्तमर्थं भवतिस्म सर्वं सम्यक्फल कर्त्तुमिहाप्यमुत्र॥
यो लक्षहोमं ह्ययुत कोटिहोमं राजा विदध्यात्प्रतिवर्षिकम
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य वृ
भवन्ति पुत्राः शुभसन्तति क्षमाश्चिरायुषो राजहिता धरित्र्या
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतुल्य

इति श्रीवृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्याय

# दशमोऽध्यायः।

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया ।
पराशरोदितं विप्रा ! वक्ष्यमाणं निबोधत ॥
?भूत् भूमा परो देवपूज्योऽसौ परदेवकः ।
स विधाता च सर्वस्य रक्षिता शासितापि च ॥
इन्द्रादियमवित्तेशवारीशमातरिश्वनः ।
शीतांशुस्तीव्रभासश्च ब्रह्मादयो द्विजौ नृपः ॥
नृपो वेधा नृपः शम्भुर्नृपोऽर्को विष्टरश्रवाः ।
दाता हर्त्ता नृप. कर्त्ता नृणां कर्मानुसारतः ॥
नाप्रक्षेद्यदि राजान दण्डं नाप्याचरिष्यतः ।
नामास्या स्तमेष्यतिच नाभविष्यज्जगत्स्थितिः ॥
नाग्रहिष्यन् पुरोडाशान्मनुष्यपितृदेवताः ।
नाभविष्यत् श्वकाकानां भागधेयं हुत हविः ॥
विगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत् ।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन् ॥
स्वधर्मस्थान् नृपो लोका नन्याम् पुत्रानिवौरसान् ।
शास्त्य धर्मविदोदण्ड मधर्मकारिणश्च तान् ॥
दण्डधृतो नराम् कुर्य्याद्धर्मज्ञानार्थसाधकान् ।
समर्थानश्वपत्यादौ शूरान् स्वामिहितोद्यतान् ॥
शुचीन् प्रज्ञांश्च धर्मज्ञान् विप्रान् मुद्राकराम्बितान् ।
लेखकानपि कायस्थान् लेख्यकृत्तु हितैषिणः ॥
अमात्यान्मन्त्रिणो दूतान्यथोदितपुरोहितान् ।
प्राड्विवाक समस्तान्वा हिताय रक्षकानपि ॥

शूरानथ शुचीन् प्राज्ञान् परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सतकृत्य वेदिनोऽपरे॥
मदायत्तं कुमाराणां मन्तःपूरुषलक्षणम्।
वृद्धानशुचिनो विप्रां स्त्र्युचीनननघान्न भीरुकान्।
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम्॥
उद्वाहमुदितं स्त्रीणां यौवने बन्धुकारणात्।
पुरस्कृत्य च विज्ञान मात्मरक्षा च यत्नतः॥
प्रातः सन्ध्यार्चनादूर्द्ध्वं गुडं पुंसवनं स्मृतम्।
यथोक्तकार्य्ये शाठ्ये च नित्य कुर्य्यात् परीक्षणम्॥
कोशेभाण्डरयादीनां हेतीनां वर्मणामपि।
कुर्य्याच्च दर्शन नित्य मतन्द्रितो महीपतिः॥
अमात्यमन्त्रयोक्तृणां सन्मन्त्रं नित्यशोऽपि च।
वेदार्थञ्च सदा होमशान्तिञ्च वृद्धसेवनम्॥
यज्ञदान तथोत्पातं समये शान्तयोऽपि च।
वर्जनं विषयासक्तो भूमिदानस्य शासनम्॥
अक्षिवर्जितदेशे तु नीतिज्ञो मन्त्रकृद्भवेत्।
नित्यमुत्साहयुक्तः स्याद् विजिगीषु रुदायुधः॥
सदालङ्कारयुक्तश्च सदैव प्रियवाक्चयः।
सदाप्रियहिते युक्तः पूज्यो नाकेऽप्यसौ नृपः॥
सदा साधुषु सन्मानं विपरीतेषु घातनम्।
दण्ड दण्डेषु कुर्वाणो राजेष्टफलमश्नुते॥
वृद्धान् साधून् द्विजान् मौलान् यो न सन्मानयेन्नृपः
पिण्ड कुर्व्वीत नामीषां भूभृत् क्षिप्र क्षयं व्रजेत्॥
यस्तु सन्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत सोऽरातीनजेयोऽप्यपि जायते ॥
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धान्येन्नृतृणतोयैश्च सम्पन्नं परमण्डलम्॥
हीनवाहनपुष्कन्तु मत्वा तत्प्रविशेन्नृपः।
मासे सहसि यात्रार्थी क्रतपुण्यश्च घोषवान् ॥
विधिवद्द्वयानकं कुर्य्यात् सदाद्वै रक्षयेद्बलम्।
यत्राचलसरीरक्षा वृक्षरक्षातु यत्र तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्बलं स्वकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्नियि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्।
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं संश्रयं द्वैधं सम्यक्ज्ञात्वा समाचरेत्।
निर्भेदं स्वबलं कुर्य्यात् हन्याच्च भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न क्षयेन्नृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत्।
परमात्मविधानानां व्यलीकहृतशङ्कितम्॥
उत्थापयेत् स्वसेनायाः स्याद्यताचित्तभेदिनः।
परसैन्ये बहून् पातान् विविधान् कुहकानपि ॥
करीणाङ्कुरदानादि वह्निपातानेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यत्नाद्रक्षान् नक्तं सर्वं निशामयेत् ॥

अन्तर्भीरून् वहि: शूरान् साग्निकान् ब्राह्मणोत्तमान्।
धर्मज्ञान् कुलसम्भूतान् विदध्यादात्मसन्निधे ॥
प्रविशेत्परदेशे तु प्रजां स्वीकृत्य संविशेत्।
उत्पाद्यं मार्गतो दूरीकृत्वापि मार्गतो व्रजेत् ॥
शस्यानि दाहयेत्पूर्वं सयवानि धनानि च।
भिन्द्यात्पूर्वं निपानानि प्राकारं परिखां तथा ॥
अपमृत्युमुपादाय भूमिसाधारणं पुनः।
गमयेद्वार्षिकान् मासानसौ च वसुधानृपः ॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम्।
न प्रभेदेन दानेन त्रिभिरेवं वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गतीः।
तद्वर्जं वशमायाति यथा रिपुस्तथा श्रयेत् ॥
आक्रान्ता दर्भसूच्योऽपि विद्युद्वृष्टप्रोपपातनम्।
न तापित युक्ते च युद्धमिद्धौ अरसिद्धिवत् ॥
स्वस्यस्यात्ययिके देशे युद्धमिच्छेत् स्वधर्मवित्।
ततः प्रविश्य तद्दूर भूमियुद्धं समारभेत् ॥
किञ्चित् सुप्तेषु लोकेषु क्षपायां यद्धमुत्सृजेत्।
सम्भीरवासतोवापि पीड़येत्परसैन्यकम् ॥
व्यूहैर्व्यूहयथोक्तैर्वा रक्षा कृत्वापि चात्मनः।
सैन्यकास्तान् समस्तांश्च नृपो युद्धाय प्रेषयेत् ॥
समानयेत् समस्तांश्च यो वसेदायतौ नृपः।
अन्विच्छन् जयलक्ष्मीं तु नीतिज्ञः पृथिवीपतिः ॥
प्रणयेनापि पत्या च शख्यास्त्रोऽपि च मानवः।
पुष्पैरपि न युद्धेत युद्धं तत्र विपत्तये ॥

हीनं परबलं मत्वा निरुत्साहमनादरम् ।
समस्तबलसंयुक्तः स्वयमुत्थाप्य योधयेत् ॥
न हन्यात् मुक्तकेशन्तु नाशयेन्न निरायुधम् ।
पराङ्मुखञ्च प्रहतं न तवास्मीति वादिनम् ॥
अन्यानपि च विद्वांश्च न हन्यात् धर्मयुद्धकृत् ।
हन्याच्चेन्नरकं याति भ्रूणहत्यासमेनसा ॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते ।
तत्पदानीष्टितुल्यानि भृत्यर्थमेकचेतसः ॥
शिरोहतस्य ये वक्त्रे विशन्ति रक्तविन्दवः ।
सोमपानेन तत्तुल्या इति वासिष्ठजोऽब्रवीत् ॥
युद्धन्ते भूभृतो येच भूम्यर्थमेकचेतसः ।
इष्टैस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टपम् ॥
एष एवापरो धर्मो नृपतेर्यद्रणार्जितम् ।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा ॥
तदा तु वशतां याति स देशो न्यायतोऽर्जितः ।
तद्देशव्यवहारेण यथावत्परिपालयेत् ॥
रणार्जितेन वित्तेन राजा कुर्य्यान्मखान् द्विजान् ।
अर्चयेद्विधिवद्विद्वान् सतान् सम्मानयेदपि ॥
मातुलः श्वशुरो बन्धु रन्यो वापिच यो जितः ।
अदण्ड्याः कोऽपि नो राजा राजनीतिविदो विदुः ॥
सुसहायमग्रपादं शूरं प्रज्ञानुरागदम् ।
सोत्साहं विजिगीषुञ्च भूभृत् चिप्रं निवेदयेत् ॥
मत्वाचार्य्यवतः सर्वान् नियुक्तार्थनियुग्भवेत् ।

रार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि देवद्रव्याणि कोशवत् ।
आदाय रक्ष्य चात्मान ततस्तत्र च तत् क्षिपेत् ॥
वित्त वार्द्धुषिकाणान्तु कदर्थस्यापि यद्भवेत् ।
पापण्डिगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपाषण्डिगणिका गणिकादयः ।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
सप्ताचिश्चाश्वगोमासान् यस्य दहत्यकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् यः पीड़येत् प्रजाः ॥
स्तोकं स्तोक तु फलक मांसं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुर्नृपो नान्यैः कदाचिदभिभूयते ।
तदैवं हृदि सन्ध्यायन् निरुत्साहो नृपो भवेत् ॥
दैवपुरुषसयोगे सर्वाः सिध्यन्ति सिद्धयः ॥
नैकेन चक्रेण रथः प्रयाति नचैकपक्षोऽङ्ग। चयाति पक्षी ।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धि नरकारतो वा ॥
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणम्।
पुंस्कारयुक्तस्य नरस्य केचिदप्यत्र दृष्टा पुरुषार्थसिद्धिः ।
अत्युद्यमी क्रियतएवच यः श्रमी च
शौर्य्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥

शुभ्राणि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
उर्वीपतित्वञ्च कृकारता च सर्वं हि मन्त्रु ज्ञयमेति दैवात् ॥
केषां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः ।
एषां प्रभुत्व बहुजीवितञ्च एको हि दैवो बलवानतोऽत्र ॥
पुंस्त्रीप्रयोगादथ युक्तयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
स्त्रीणान्तु तत् विप्र । नचापि पुंसां सर्वाणि चैषा मनुजेश्वरत्वम्
कासान्तु गर्भस्य न सम्भवोऽस्ति कामान्तु शुक्र नतु वीर्य्यहीनम् ।
अथत्त गर्भोऽपि जहाति गर्भं काचिच्च गर्भं न बिभर्ति दैवात् ॥
धाता विधाता निजकर्मयोगाद् विधेस्वभीष्ट त्वनुभावभाव्यम् ।
देवासुराणां नच दैत्यकानां स ह्येव कर्त्ता तु मनूद्भवानाम् ॥
दैवान्मघोनापि रुद्रस्त्वमत्र्यां दैवाद्धिमांशोः क्षयरोगता च ।
दैवात्पयोधौ लवणोदकत्व दैवाद्रवेश्चित्रतरा च दृष्टिः ॥
यद्यप्यमुष्य न परोऽस्ति दैवात् कुर्य्यात्तथापीह नरो कृकारम् ।
उद्दीपयेत्कर्मकरो कृकारादुद्दीपितं श्रीरिववै तनोति ।
दैवेन केचिच्च हठेन केचित् केचिन् कृकारेण नरस्य चार्थाः ।
सिध्यन्ति यत्नेन विधीयमाना स्तेषा प्रधान नरकारमाङ्कः ॥
स्वामिप्रधानं त्वयदुर्गकोशान् दण्डञ्च मित्राणिच नीतियज्ञाः ।
अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गपूर्वो नृपतिर्धराभुक् ॥
दुर्वृत्तसद्वृत्तनरेषु दण्ड राज्ञा विधेय निपुणार्थसिद्धै ।
दण्डञ्च मत्वाऽर्जितवित्तसत्त्वात् हीनार्थ पुंसाञ्च दमन्ति हीनम् ।
अन्यायतो ये जनन जनेश्वराः संपीड्य वित्तानि नयन्ति लोभात् ।
तत्क्रोधवह्नि परिदग्धकायाः क्षीणायुषस्ते तु भवन्ति भूपाः ।
दण्डो महान्मध्यकमन्यथस्तु मानन्तु तस्य त्रसरेणुकादि ॥
साशीति साहस्त्रपणामहान् स्यादर्धादिके चैव तदर्धको वा ।

सर्वार्थपादस्त्र हरश्च दण्डः पात्यो नृपेणेति वदन्ति सद्यः॥
पाण्यादिपादच्छेदनमारणञ्च निर्वासनं राष्ट्रतएव सद्यः।
ज्ञात्वापराधं मनुजस्य यस्तु देशञ्च कालञ्च वयोवपुश्च॥
दण्डेषु दण्ड विदधाति भूभृत्मास्य स बध्नाति पुरन्दरस्य।
यः शास्त्रदृष्टेन यथा नरेश्वरो दण्डं विदध्याद्विधिवत्करांश्च॥
स चैवकीर्त्तीर्वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान्।
यस्तूक्तमार्गाणि कुलानि राजा श्रेणिञ्च जातीश्वरतांश्च लोकान्
आनीय मार्गे विदधाति धर्मे नागेशगीर्वाणगणैः प्रशस्यम्।
अन्यश्च वह्निर्जलवित्तनाथशीतांशुरूपाणि ह विभ्रतीह॥
सर्वं च भूयस्त्विह रूपकञ्च तत्तथ्यमान शृणुत द्विजेन्द्राः।।
यद्वा जिगीषुर्धृतशस्त्रपाणिः स्वियं समालम्ब्य स विद्वसैन्यः॥
सर्वान् सपत्नांश्च स हन्तुकामस्तदाग्न्हर्यश्व इवावभाति।
आकारणात्कारणतोऽपि एष प्रजा हतेय स सम्बद्धकीर्त्तिः॥
यदा तदैनं नृपतीति विज्ञास्तनूनपात्तं प्रवदन्ति भूपम्॥
धर्मास्तनस्त्वश्रुतिशास्त्रदृष्टाः शुभाशुभाचारविचारकृत्स्यात्॥
धर्म्येषु दानं त्वपकृत्सु दण्डं यदावनीशः सच धर्मराजः।
धनप्रदानेन करोति हृष्टा भूभृत्तदासान्द्रविणेशवश्यान्॥
समस्तशीतांशुगुणप्रयोक्ता यदायदामेष शुभाय शास्येत्।
प्रसन्नमूर्त्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीशः॥
आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये त समस्तवध्यः।
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोकैः॥
दुर्धर्षतीव्रांशुसमानदीप्तो ब्रूयान्मनुष्यः परुषं नृपस्य।
यस्तस्य तेजोऽप्यवमन्यमान्यः सद्यः स पञ्चत्व मुपैति पापात्।

योऽज्ञाय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति।
कस्यापि चाज्ञां न विभर्ति राज्ञः
समस्तदैवांशभवोहि यस्मात्॥
यः स्वधर्मे स्थितो राजा प्रजां धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोकमवाप्नुयात्॥
इति श्रीवृहत्पाराशरीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यश्रौताग्निकर्मकृत्॥
वन्यैर्मुन्यशनैर्मेध्यैः श्याममीवारकङ्गुभिः।
कन्दमूलफलैः शाकैः स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीरवासा वै श्मश्रुलोमजटाधरः।
पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायं नित्यमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाध्यात्मचिन्तकः॥
सन्न्यस्तश्चान्तको नित्यं दानशीलः सदा द्विजः।
किञ्चिद्दैवं समाश्रित्य स वृत्त्या वर्तयेत्सदा॥
एकाह्निकं तु कुर्वीत मासैकस्यार्थसञ्चयम्।
षाण्मासिकञ्चाब्दिकञ्च यथार्थं च वने वसेत्।
त्यक्त्वा तदाश्विने मासि अन्यं स्थानं समाचरेत्॥
यथावदग्निहोत्रं तु समिधाग्नौ च पालयेत्।

कृच्छ्रचान्द्रपराकाद्यैः पञ्चमासोपवासकैः॥
त्रिरात्रैर्वैकरात्रैश्च आश्रमस्थः चपेत्तनुः।
तिष्ठन्वाव्रतिकस्तत्र क्षपेदधस्तथा निशि॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत्।
योगाभ्यासरतोनित्यं स्थानासनविहारवान्॥
वसन्तग्रीष्मवर्षासु जलाग्न्याकाशमाश्रयेत्॥
दन्तोलूखलिको वापि कालपक्वभुगेव च।
स्यादाश्मकुट्टकोविप्र. फलस्नेहैश्च कर्मकृत्॥
शत्रौ मित्रे समः स्याच्च तथैव सुखदुःखयोः।
समदृष्टिश्च सर्वेषु न विशेद्दनगह्वरम्॥
म्लेच्छव्याप्तानि सर्वाणि वनानि हि कलौ युगे।
न भूयः शासितारस्तु ग्रामोपान्ते वसेदतः॥
ग्रामाच्च नगराद्देशात्तथारण्यवनानि च।
क्षितौ शरक्षितान्येव सर्वेषां फलदानि हि॥
भूपतेः प्रथमं तत्स्यात् कृत्यं शसेद्द्विजाग्रतः।
यागं वाऽरण्यवासं वा कुर्याच्च तदनुज्ञया॥
सुत्रामानलवायूनां यमस्येन्द्रविवस्वताम्।
यदा वित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममौ नृपम्॥
पारत्रिकं तु यत्किञ्चित् यत्किञ्चिदैहिकं तथा।
नृपाज्ञया द्विजातीनां तत्सर्वं सिद्ध्यति ध्रुवम्॥
नृपतेः प्रथमं न स्यात् स वै द्विज। मखादिकम्।
रक्षार्थं कथयित्वा तु यथाकार्यं समापयेत्॥
धेनुपूर्वं वशिष्ठस्य ह्यसौ दुर्वाससोऽपि च।
वनवासाश्रमस्थस्य ह्यग्निकार्याय तां श्रयेत्।

पलस्नेहाय दानस्य कालवैगुण्यतोद्विजः॥
तथा गोदुग्धसर्पिष्य मग्निकार्यं समापयेत्।
सर्वकालेषु सर्वेषु तथा चैवाश्रमेषु च॥
गोदुग्धादि पवित्रं स्यात् सर्वकार्येषु सत्तमाः। ॥
सर्वकार्येषु सर्वेषु भिक्षां कुर्याद्वनाश्रमी।
तथा सर्वे प्रकुर्वन्ति पितृदेवार्चनादिकम्॥
अष्टौ भुञ्जीत वा ग्रासान् ग्रामादाहृत्य यत्नवान्।
आश्रमः संक्षयं गच्छेदनिलां प्रागुदीचिकाम्॥

विप्रोविधाय वनवासविधेयधर्मान्
सर्वानिमानुक्तविधिक्रमेण।
सम्भुज्य पापानि वपु विशोध्य
ब्रह्माधिगच्छेत् परम द्विजेन्द्रः॥

आश्रमत्रयधर्मान्प्राक् चरित्वा ते द्विजातयः।
द्वयोश्च वा ततः पश्चाच्चतुर्थाश्रममाचरेत्॥
द्विजाग्रजो यदा पश्येद्वलि पलित मात्मनः।
उपरति तथाक्षाणां क्षीणकामः स वै द्विजः॥
समीक्ष्य पुत्रपौत्रं वा दृष्ट्वा वा दुहितुः सुतम्।
अधीत्य विधिवद्वेदान् कृत्वा यागविधानताम्॥
निश्चयं मनसा कृत्वा चतुर्थाश्रममावसेत्।
अज्ञापत्य विधायेष्टिं वनाद्वासमनोऽपिवा॥
समस्तदक्षिणायुक्तां सर्ववेदास्तथाज्ञवान्।
अग्निनात्मनि चारोप्य दण्डान्विधिवदाचारेत्॥
किञ्चिद्वेदं समास्थाय तद्धर्मेण च वर्त्तयेत्।
वाङ्मनःकायदण्डांश्च तथा सत्त्वादयो गुणाः॥

सुमुख्यो नियतो यस्य स त्रिदण्डीति कथ्यते ।
कमण्डलुश्चमालाच भिक्षापात्र मथापरम् ॥
काषायवासःकौपीनकार्यार्थं वस्त्रमेव च ।
शिखायज्ञोपवीतञ्च दण्डानां त्रितयं तथा ॥
द्विकालविधिवत् स्नानं भिक्षया चापि भोजनम् ।
शुद्धैकवृत्तिर्विप्रेषु सत्कर्म निरतेषुच ॥
भिक्षावर्णोयतिः प्रोक्तो वृत्तवर्जन्तथैव च ।
असंभाष्यं स्वशून्येच तथाच शिल्पकारुभिः ॥
अवक्तव्यं तथा स्त्रीभिरेतत्कृत्य यतेः स्मृतम् ।
सर्वदा दम्भसरोधो नित्यमेकान्तशीलतः ।
सदैव प्राणसरोधः सदैवाध्यात्मचिन्तनम् ।
मृद्वेणुदार्वलाव्बूममय पात्रं यतेः स्मृतम् ॥
शुचिरम्भस्त्वमीषाञ्च गोबालस्याघमर्षणम् ।
न दण्डेनैव दण्डेन विना वातेन वा तथा ॥
मोक्षावाप्ति र्भवेत्पुंसां किन्तु साध्यात्मचिन्तनम् ।
समत्वं सुखदुःखेषु तथा वै द्वेषरागयोः ॥
आत्म समानधर्म्मत्व मजस्त्र चात्मचिन्तनम् ।
यतिभिस्त्रिभिरेकत्व द्वाभ्यां पञ्चभिरेव च ॥
न स्थातव्य कदाचित्स्यानुशिस्यन्तो नाशमाप्नुयुः ।
बहुत्व यत्र भिक्षाणां वार्तास्तत्र विचित्रकाः ॥
स्नेहपैशुन्य मात्सर्यंभिक्षाणां नृपतेरपि ।
तस्मादेकान्तशीलेन भवितव्यं सदा द्विज ! ॥
आत्माभ्यासमरतो नित्यं ब्रह्मावाप्ति मभीप्सताम् ।
त्रिदण्डग्रहणादेव प्रेतत्व नैव जायते ॥

अध्यात्मयोगयुक्तस्य ब्रह्मावाप्तिर्भवेद्ध्रुवतः।
यतेन्द्रियोऽपि दण्डार्हो युवा तस्य तथा निरुक्।।
युवा निरुक्तथाभिक्षुरात्महृद्ब्रह्महर्षकः।
भिक्षुर्मठे वसेत्तत्र कामार्थान्योऽभिगच्छति।।
तत्स्थानेन तथा चैव सह तेनैव तापयेत्।
निवसेदेकरात्रश्च वहिर्यत्र तु वेश्मनि।।
स तारयति तद्वान्वै विंशतिं पितृमातृतः।
भिक्षुर्यस्यान्नन्तु ब्रह्म योगाभ्यासरतो भवेत्।।
परिणामश्च योगेन कृतकृत्यो गृही स तु।
निर्ममो निरहङ्कारः सर्वैः सह प्रयच्छति।
ब्रह्मण्यात्मनि गोमायो मूले द्वच्छास दामहक्।
चिह्नानि धाता कथितानि यस्यवक्ते सयस्याभिहितेव भिक्षा।।
योध्यानवान् वा सततं जिताक्षः स ब्रह्मकाख्योगमनं करोति।।
वनस्य भिक्षुधर्मान् वै यानब्रवीत्पराशरः।
तथावदभिधायैतान् वक्ष्याम्याश्रमभेदकान्।।
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे वानप्रस्थयति-
धर्मोनाम दशमोऽध्यायः।

---

## एकादशोऽध्यायः।

अथातः संप्रवक्ष्यामि भेदमाश्रमसम्भवम्।
ब्रह्मचर्यादिकानान्तु तथा तथ्यं निबोधत।।
चतुर्णामाश्रमाणां तु भेदो दृष्टो मनीषिभिः।
प्रत्येकशो वदाम्येतत् शृणुध्वं द्विजसत्तमाः।।

ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यती ।
एतद्भेदं प्रवक्ष्यामि शृणुध्वं पापनाशनम् ॥
चतुर्धा ब्रह्मचारी च स्वाद्या यत्र यतस्तथा ।
अजायत्या इहस्त्रेति लक्षणानि पृथक् पृथक् ॥
अचारलवणाशित्या गायत्र्याच स प्रत्यहम् ।
वर्तते त्र्यपया नित्य गायत्र्यं तत्प्रकीर्तितम् ॥
चतुर्धा द्वादशाब्दानि योऽधीयानश्चतुः श्रुतीः ।
भिक्षया ब्रह्मचर्येण तेष्वध्यात्मं तदुच्यते ॥
ऋतुकालाभिगामी सन् परस्त्रीपर्ववर्जकः ।
वेदानध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते ॥
गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ ।
यो वसेदात्मसंज्ञानं ब्रह्मचारी स नैष्ठिकः ॥
गृहस्थस्य चतुर्भेदो मतः शालीनतीव्रकौ ।
यायावरास्तथा वान्ये घोरसन्यासिकास्तथा ॥
कृषिगोरक्षवाणिज्यैः सर्वान् कुर्वन् क्रियां द्विजः ।
विहितोच्चात्मविद्यश्च वार्तावृत्तिः स उच्यते ॥
ददात्यध्येति यजते याजयेत् चैव पाठयेत् ।
कुर्यात्कर्म प्रतिग्राही शालीनोऽध्यानकृद्द्विजः ॥
उक्तः सन् कारयेदन्यां क्रियां कुर्यात्प्रतिग्रहे ।
पाठको नियतात्मा च यायावरः स उच्यते ॥
तिष्ठेद्व यश्च शीलोञ्छाभ्यां सुवृताद्भिश्च वर्तते ।
आश्रविच्च क्रियां कुर्यात् घोरसन्यासिकः स तु ॥
वानप्रस्थचतुर्भेदो वैखानस उदुम्बरः ।
वालखिल्यो वनेवासी तल्लक्षणमथोच्यते ॥

फलैर्मूलैरकृष्टान्नैरग्निकल्पेन वै वसन् ।
कुर्यात्पञ्च महायज्ञानात्मविद्वैखानसः स तु ॥
इमानि तत्फलः कृष्टधने धनुः उदम्बरे ।
योवा वसेदतो ज्ञानी पञ्चयज्ञाग्निकर्मकृत् ॥
वनस्थो बालखिल्यो यो वसेत् वल्कलचीवरम् ।
अग्निकार्यकृदात्मज्ञः दुर्जातसेवितं त्यजेत् ॥
चतुरोऽन्यानमूनग्निकार्यं कुर्वन्वने वसेत् ।
फलस्नेहैः फलैर्वन्यै र्बहुभिः श्रुतिचोदितम् ॥
उद्धृत्य परिभूतादि तथा वै विष्टरत्तिकः ।
फलैर्वन्यैर्वनान्तैश्च फेनपः पञ्चयज्ञकृत् ॥
पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि ।
न दुष्यात्रः कुटीस्थोवा यद्भैक्ष्यं वृत्तिभुक् द्विजः ॥
ज्ञेयो बहूदयो नाम यश्च पवित्रपादुकः ।
शिखासनोपवीतानि धातुकाषायवासकृत् ॥
चतुर्भेदपरिव्राट् स्यात् कुटीचरबहूदकौ ।
हंसाः परमहंसाश्च वक्ष्यन्ते तु पृथक् पृथक् ॥
साधुवृत्ति र्द्विजो यस्तु भिक्षाभुगात्मचिन्तकः ।
बहूदकः स्वयं ज्ञेयः परिव्राट् स त्रिदण्डधृक् ॥
एके दण्डधरा हंसाः शिखोपवीतधारिणः ।
वार्याचारकराः शान्ता भूतानामभयप्रदाः ॥
वसेदेकक्षपां ग्रामे नगरे पञ्च सर्वशः ।
मर्षयन्तो व्रतैर्देहमात्मध्याने सदा रताः ॥
एकदण्डधरा मुण्डा कन्याकौपिनवाससः ।
अत्यन्तलिङ्गिनोऽव्यक्ताः सर्वदैव च मौनिनः ॥

शिखादिरहिताः शान्ताः उन्मत्तरवधारिणः ।
नग्नः शूरामरैः केश वासिनो ब्रह्मचिन्तकः ॥
ये ते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवः ।
उक्ता स्वव्रतभेदस्तैरात्मन प्रार्थनापराः ॥
यो ब्रह्मचर्ये व्रतचारिभेदो
भेदो गृहस्थस्य तथैव यत्नतः ।
हिरण्यवासो द्विजकर्मभेदो
स्मृतो मयासीद्द्विजभिक्षुभेदः ॥

इति बृहत्पाराशरीये वानप्रस्थयत्याश्रमभेदो नाम एकादशोऽध्यायः ॥

---

## द्वादशोऽध्यायः ।

मुमुक्षवो विरज्यन्तो देहाद्देहादितो यथा ।
शरीरत्रासया प्राज्ञः परब्रह्मत्वय गताः ॥
स्वेदाद्यम्बयसुधालीभि मारक्षामाशुनाशि तत् ।
तन्मुख्ये गुणसंयुक्ते तत्पश्चालनं व्रजेत् ॥
शुक्लशोणितसंयोगात् स्त्रीकोष्ठपाकसम्भवम् ।
दुःखेन दशभिर्मासैर्व्यापितम्भूरि दोहदैः ॥
जनन्यादौ स्वक्षाभावे गर्भस्थस्यापि दुःखित ।
सतश्च जायमानस्य योनियन्त्रनिपीड़नात् ॥
जातस्य बालरोगाद्यैः योगिनीग्रहदोषतः ।
देहिनः सर्वदा दुःखं पूजाजन्मादिकैर्ग्रहैः ॥
एवं बाल्ये महद्दुःखं कामाद्यं यौवनेऽपि च ।

स्त्रिया विना तु स्याद्धर्षाद्दरिद्रैश्वर्ययोरपि ॥
क्षुत्तृड्भ्यां प्रथमे वित्तं रक्षणाद्यै द्वितीयके ।
वृद्धत्वे वा तयोर्दुःखन्तस्माद्दुःखमयं वपुः ॥
मासेन लोपित बालं स्नायुभिः कुल्यसञ्चयम् ।
मेदोऽस्थिघनसम्पूर्णां कफपित्तस्य साश्रयम् ॥
अमेध्यपूर्णभस्त्रावं दग्धे वै सर्वदा शुचि ।
तस्मायाः स्नानगन्धाद्यैर्निर्गन्धी क्रियते बहिः ॥
दुर्गन्धः सर्वरन्ध्रेषु स्वभावोद्वेगकारणम् ।
सततञ्च स्वभावमेध्यङ्किं देहे शोच्यते शुभम् ॥
यद्दग्धं भवेन्मृत्स्ना दग्धभस्मत्वमाप्नुयात् ।
मृतस्य दृश्यते किञ्चित्तृणाकोपरतस्य च ।
क दृश्याभ्युद्यते विद्वान् कश्चेह म्रियते पुनः ।
यन्त्वेपममिदन्धीमन् ! वायुत्यक्तं मृतम्भवेत् ॥
पृथगात्मा पृथक्खातं पृथक् खानि दर्शानि च ।
पृथक्भूतानि भूतानि पृथक्तेषां गुणोत्तरः ॥
पृथक् पापं दिवायुश्च तद्गतिश्च पृथक् पृथक् ।
पृथक् पृथगिति ह्येतत् पृथग्भिः किमिहोच्यते ॥
आरम्भकाणि यान्येव तेषु यान्ति तदंशकाः ।
प्रत्ययाद्यद्यदवाप्नोति याति वीर्यं पुनर्वपुः ॥
शृणुयात् पादपस्पर्शं जिघ्रेत् स्वादेद्रियां स्मरेत् ।
स्वपेच्च जागृयाद्गच्छेद्व्रयाद्ध्यायेद्यतेत वा ॥
म्लानीयाद्यद्यथाप्यद्य जायेत स नयेदपि ।
सोऽस्तिकश्चेत्परो देहाद्योदेहीति निगद्यते ॥
नैकश्च स्यान्नदेहे वै प्रत्यभिज्ञा कथम्भवेत् ।

एकदृक् दृष्टरूपस्य पुनरन्येन पश्यतः ।
अद्राक्षं यदहो वस्तु तदेवैतत्स्पृशाम्यथ ॥
यच्चास्पृक्षं च पश्यामि प्रतीतिर्यस्य जायते ।
दर्शनाभ्यां तु सतत गृह्णेयादेकवस्तुनः ॥
अस्ति ह्यात्मा परो देहात् यो देहीति च कथ्यते ।
गृहीच गृहमध्यस्थो यत्नादिच समाचरेत् ॥
देहे चताहिमरोहात् वशो देह्यस्ति कश्चन ।
स एव पूज्यते कुर्वन् उद्देशो तस्य तावित ।
वार्यते कर्मणा चायं बाध्यते कर्मणापि च ॥
उभयस्यापि चैवात्र प्रत्यक्षं दृश्यते द्विजाः ! ।
मायाविनश्च मूकत्वमतिकान्तागताश्चमान् ॥
अत्र बाधान्यहर्तृणां पिशुने पूतिनासिना ।
भरतो वर्णकैश्चित्रैर्देहस्य वर्णयेत्तथा ॥
कुर्वन्नानाविधं कर्म तथात्मा कर्मजस्तनूः ।
जरायुजाण्डजादीनि वपूंसि यो गृह्णेन्निजैः ॥
कर्मभिर्वर्णभेदैश्च चित्रदैर्गत्यरूप्यतः ।
बधिरान्धकिनः क्लीवा जायन्ते पुरुषाधमाः ॥
निरतः स पुनर्भूत्वा विद्वद्द्विजकुलेषु च ।
महाकुर्चाश्च जायन्ते लक्षणाञ्चितयान्विताः ॥
धनवन्तः प्रजायन्ते वेदवन्तो यशस्विनः ।
रूपसम्भाग्यसम्पृक्ताः सर्वेषां नयनप्रियाः ॥
ब्रह्माद्याश्चरतां शान्ताः षट्कर्मनिरतास्तथा ।
पञ्चयज्ञकृतो नित्यं अग्निष्टोमादिषु स्थिताः ॥
द्विजोपास्तिकरा नित्यङ्गुर्वाचार्यादि पूजकाः ।

चतुराश्रमधर्माणां कथिताः समदर्शिनः ॥
गुणैः सर्वैः समायुक्तास्तेजस्विनो द्विजप्रियाः।
एवम्भूताश्च ये विप्रास्तेषां विष्णुः सदान्तिके ॥
विष्णुश्च सर्वदेवत्वं तस्माद्विप्रा मयोभवेत्।
देवत्वार्चाकृतां नित्यं गुरूपास्तिरतान्तथा ॥
ब्रह्मैवाचामता सम्यक् ब्रह्मनाभिर्भगच्छति।
तदुपास्य सदा ब्रह्म यावत्साधनकञ्च यत् ॥
बहुपापान्विदित्वा यः ससरेन्नेह मानवे।
वदन्ति ब्रह्मदेवेशे ब्रह्मन्यासमनेकधा ॥
ब्रह्मापि द्विविधं धाम न परं परमेव च।
सनातनं परं ब्रह्म शब्दब्रह्मेति कीर्तितम् ॥
प्राणायाम्यन्निरूपनात् प्रागेव हि विशेषतः।
प्राणायामं तदभ्यस्य पूरकाद्यैश्च वायुभिः ॥
पूरको कुम्भको वायू रेचकस्तु द्वितीयकः।
येन व्यावर्तते वायुर्नासाग्राग्निःसरन्वहिः ॥
श्वासयोगेन तं प्राज्ञः पूरकं तद्विदोऽनिलम्।
श्वासयोगं वदन्त्येनं कवयस्तन्तु पावनम् ॥
विदुस्तं रेचकं तज्ज्ञाः रेच्यश्च शनकैः शनैः ॥
न वेगाद्रेचयेद्वायुः सर्वथा विघ्नभाक् भवेत्।
मोचयेन्मन्दमन्दन्तु वह्निः स्यात् कुम्भितो यथा ॥
नासाग्रस्थितपाणिन्तु भशिखञ्चालनं चमम्।
अनिलं रेचयेद्योगी न मन्दं वाति वेगवान् ॥
न चायतेऽनिलो दस्य निःसरन्नासिकाग्रतः ॥
यस्मात्तु कुम्भितो जन्म प्राणयोगी स उच्यते।

दीर्घादुःखं परं ज्ञानं समस्ता योगऋद्धय: ॥
देहे तस्यावतिष्ठन्ति प्राणायामवशीकृता: ।
यत्र तिष्ठति जीवोऽस्य निःस्वोऽस्तत उच्यते ।
स किन्न धार्य्यते प्राणो ब्रह्मा तिष्ठति यत्र तु ॥
प्राण एव हि चात्मा च प्राणो देहस्य वाहक: ।
शरीरान्निःसृते प्राणे नात्मा विग्रहवाहक: ॥
देहं त्यक्त्वा यदा जीवो वहिराकाशमास्थित: ।
तदा निर्विषयो वायुर्भवेदत्र न संशय: ॥
तदा समजे देहेषु नासाग्रमास्थित: शिव ।
प्रत्यक्ष: सर्वभूताना तिष्ठते नच लक्ष्यते ॥
तदा न श्वसते वायुस्तदा निष्कल मुच्यते ।
नाभिसंस्थन्तु विज्ञाय जन्मबाधाद्विमुच्यते ॥
देहस्थ: सर्वसत्वानां स जीवति शृणोति च ।
धर्माधर्म्मौ श्रवष्टभ्यौ देहे देहे व्यवस्थितौ ॥
सुषुम्नकुञ्जसंस्थस्तु श्रथ ऊर्द्ध्वं प्रधावति ।
धर्माधर्म्मैर्महापाशै र्गृहीत: स प्रवर्त्तते ॥
श्रर्द्धमुच्छ्वसते यावत् प्राणो द्रव्यसमीरणात् ।
तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमास्थित: ॥
श्रतस्य निष्कलं ब्रह्म यावन्न श्वसते द्विज: ।
श्वसनेन समायोगादाकाशात्पुनरागत: ॥
नासारन्ध्रसमालीन स्तदा निष्कल उच्यते ।
स जीव इति विख्यात: स विष्णु: स महेश्वर: ॥
ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु ।
विष्णुब्रह्मेश्वरास्तेषु स्थानेषु स्थावरा द्विजै: ।

नीलपङ्कजविख्यातं आनीय नाभिमध्यतः॥
महात्मानं चतुर्बाहुकेयूरन्तं हरिं स्मरेत्।
हृत्पद्मे कुम्भके ध्यायेद् ब्रह्माणं पङ्कजासनम्॥
रक्तोन्दीवरवर्णाभं चतुर्वक्त्रं पितामहम्।
रेचके शङ्करं ध्यायेत् ललाटस्थं त्रिशूलिनम्॥
शुद्धस्फटिकसङ्काश संसारार्णवतारकम्।
एवं श्वसनसरोधो देवतात्रयचिन्तनात्।
अग्निर्वाय्वम्बुसंयोगादन्तर शुद्यति त्रिभिः॥
निरोधादभवद्वायु स्तस्मादग्निस्ततोजलम्।
इति त्रिदेवतायोगात् शुद्धत्वे न पुनर्द्विजाः॥
भवन्ति प्रणवोपेताः प्राणायामस्तु षोडश।
अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः॥
प्रातरहश्वसायञ्च पूरक ब्रह्मणोऽन्तिकम्।
रेचकेन तृतीयेन प्राप्नुयात् परमं पदम्।
न प्राणेनाप्यपानेन वायुवेगेन रेचयेत्॥
प्रागुक्तेन प्रयोगेण मोचयेत्प्राणसयमी।
शरीरञ्च शिरोग्रीवं विहत्पाणि च पाद्द्वयम्॥
सर्वाङ्गं निश्चलं धार्य्यमापूर्य्य सर्वनाड़िकाः।
सधृत्याङ्गानि सर्वाणि कर्मविज्ञानकृद्द्विजः॥
बद्धासनो चलाङ्गस्तु कुर्यादसुनिरोधनम्।
कृत्वासुमञ्चयं विद्वान् विधिज्ञः समुपस्पृशेत्॥
अन्तरे शुध्यते यस्मात् कुर्यादाचमनं स्मृतम्।
इत्युक्तः प्राणसंरोधो देवतात्रयसंयुतः॥
त्रिमात्रप्रणवस्तत्र ध्यातव्यः सर्वयोगिभिः।

स्मर्यमाणस्य यातस्य विश्रान्तिः स्यादमात्वकैः ॥
तत्परं निष्कलं ज्ञानं तद्विदु ब्रह्मचिन्तकाः।
मृदुमध्योत्तमत्वाच्च स्थूलसूक्ष्मानुभावतः॥
त्रिविधं प्राणसंरोधं विदुस्तत्त्ववेदिनः ।
क्रियमाणो विशेषेण प्रत्याहारोऽथ मुच्यते ॥
सर्वं प्रागुक्तमेव स्याद्विशेषं तु निबोधत ।
वाह्य वायुं यथोत्साह आकृष्य यच्छनैः शनैः ॥
निरुध्य विधिवद्योगी प्रत्याहारः स उच्यते ।
व्यावृत्यातिमुखी यत्र खानि यत्र निरुध्य च ॥
चिन्तयेन्निश्चलीकृत्य प्रत्याहारः स उच्यते ।
प्राणाद्यवयवस्थूलाः सकल्याद्यासुवायवः ॥
निरोद्धव्या द्दशोऽप्येते प्राणसंयमकारिभिः ।
वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते ॥
प्रकर्षेण समन्ताच्च न यानादिक्रिया स्मृताः ।
भविष्यातीतकालेभ्यः कर्मभ्यश्चात्म संयमी॥
सर्वानिलांस्तथा खानि निरुध्यैकत्र धारयेत् ।
स धीमान्वेदविद्विद्वान् स योगी ब्रह्मवित्तमः॥
स्थानं द्विजन्मा विधिवत् प्र॰ख माणस्य यद्वयातिविधिः पर
पाराशरोक्तैर्बहुभिः प्रकारै रुक्तोविधिः प्राणनिरोधनस्य ॥
प्रत्याहारो विशेषस्तु प्रोक्तस्तस्यैव वित्तमाः ।
यदभ्यस्याप्नुयाद्ब्रह्म सर्वदा नैदमव्ययम् ॥
इति श्रीवृहत्पाराशरे प्राणायामप्रत्याहारविधिः ।

---

यातैस्तु पुनरावृत्तिः कदाचिदिह दृश्यते ।
सस्मृति नाप्नुयाद्येन शक्रसूनुस्तदाब्रवीत् ॥
उक्तोऽसि संयमं पूर्वं विधिहीनोऽहि नाशनः ।
निबोधध्वं चतुर्थन्तु ध्यानं प्रणववैभवाः ॥
विधिवत्प्रणवध्यानमेकचित्तस्तु योऽभ्यसेत् ।
ब्रह्माभ्येति स मुक्तात्मा स योगी योगिनां वरः ॥
तद्ध्यानमसुसंरोधं तुर्यसञ्ज्ञमिहोच्यते ।
तदध्याध्यान पेचन्तु चिन्तापेचविवर्जितम् ॥
तच्छान्तं निर्मलं शुद्धं ध्यातव्यं हृत्सरोरुहे ।
तद्ध्येयन्तद्वरेण्यन्तु मुक्तिबीजं तदुच्यते ॥
सञ्चित्य व्याहृतीः सप्त प्रणवाद्याः स्वदन्तकाः ।
सम्यगुक्तमिदं ध्यात्वा परब्रह्मणि योजयेत् ॥
हुतभुक् पवनो जीवस्त्रयोऽप्येते हृदि स्थिताः ।
ये तत्सर्वन्तु वैकल्प संसारे ध्यानकोऽद्विजः ॥
ओङ्कारावर्त्तनालेन उद्धृत्य परियोजयेत् ।
योजयेत्सर्वमेवैतत्सिद्धयोगी स उच्यते ॥
शून्यभूतं तु यत्प्राणो ह्रामजीवितकल्पितम् ।
यस्मादुत्पद्यते श्वासः पुनस्तत्र निवेशयेत् ॥
आद्यन्तप्रणव विद्वान् घटाकाशवदुत्सृजेत् ।
स पश्यन् निर्मलं योगी पुरुषं मम सन्ययम् ॥
अन्तर्वक्रः बहिः रुध्यकुण्डलीभूतसर्पवत् ।
ध्यातव्यः प्रणवस्तस्य मध्यमं धाम संस्मरेत् ॥
स ध्यातात्मा स विन्दुश्च तदेव परमं पदम् ।
तदभ्यस्त हि तज्ज्ञात्वा स तस्मिन्नेव लीयते ॥

प्रथमं प्रणवो वक्त्रा ह्यत्तरः परमाक्षरः ।
इजत्वमन्यदाप्नोति संप्राप्य परमं पदम् ॥
पञ्चमं तु पद विद्वन् ! तन्मूर्धन्यवतिष्ठते ।
नादविन्दुः समाख्यातोद्विजेन्द्राः । परमंपदम् ॥
यत्प्राप्य न निवर्त्तन्ते भारत्यस्मात्यमेव च ।
सर्वेभ्यो मातृकावर्णाः पुनस्तत्र विशन्ति च ।
वर्णात्मासन्नवर्णास्तु समस्तं वर्णजीवनम् ॥
न दीर्घं न च ह्रस्वञ्च न घोषं नाप्यघोषवत् ।
न विसर्गस्य वा विद्वान् नानुस्वारविपर्य्ययः ॥
हृद्याकाशनिविष्टं यदचलत्व प्रयाति चेत् ।
ज्ञानयोगे त्रिषष्टिर्वै यो विभर्त्यक्षराणि तु ॥
तत्परं योगिभिर्ध्येयं व्योम यस्य तु मध्यमम् ।
व्योमान्तगं यत्तुध्येयमनन्ताकाशमव्ययम् ॥
चिन्तयामो वयं तत्त्वं धियो यो नः प्रचोदयात् ।
ये तद्ब्रह्मत्रयीरूप मेतद्धर्म त्रयीमयाः ॥
येषां स परमा मुक्ति र्गत्वा यां न निवर्त्तते ।
आदाय चाप प्रणवं च वाणा सन्धाय चात्मानमवेपलक्ष्यम् ॥
सम्यग्विधिं तं प्रविविश्य तस्मिन् प्राप्नोति योगी स तु मुक्ति
उद्देशभक्तिं विधिनादि विद्वन् ! ध्यानं विधेय ध्वनिपूर्व्वकञ्च
सर्वं विधानं विधिवच्च सम्यक् यस्तु समर्थोविधिरेव चास्य ॥

इति श्रीबृहत्पाराशरीये योगाध्यायप्रणव-
ध्यानविधिः सम्पूर्णः ।

---

अथाऽन्यत्संप्रवक्ष्यामि विधानं ध्यानकर्मणाम् ।
नानामतोदित कार्यं परब्रह्माप्तिकारकम् ॥
कामात्मकमिह प्रोक्तं परमात्मा किमुच्यते ।
वक्ष्यमाणमिदं विप्राः ! शृणुध्वं भक्तितत्पराः ! ॥
स्वीयेन कर्मणा येषां शरीरग्रहणं भवेत् ।
कर्मात्मन स्तदुच्यन्ते निर्गताः परमात्मनः ॥
ते न स्पृशन्ति सत्त्वांश स्तथा सत्त्वदयोगुणाः ।
कदाचित्केन कर्माणि परमात्मा ततः परम् ।
निष्ठानाशौचविद्येति गुणत्रयं स्पृशन्ति हि ॥
सो यस्मिन् कथमेतस्मिन् लोकपालो विधीयते ।
स्वात्मानमेव चात्मानं वेष्टत्कोष्टककारवत् ॥
कर्मणैव प्रजातस्तु बाह्यस्वार्थविमोहितः ।
तस्माद् विवर्जयेत्कर्म स्वर्गादेरपि साधकम् ॥
संसारेस्वर्गतिः कर्मक्षयः सतु पुनर्यतः ।
सीमैषा परमाविना ब्रह्मणः पातमोक्षयोः ॥
कर्मस्थानमिदं धात्री कृतमत्रोपभुज्यते ।
वैदिकः कर्मयोगश्च द्विविधोऽप्यावृत कस्य तु ॥
योगेच्छाप्रवृत्तिवान्स्वच्छ ज्ञानयोगमतोऽभ्यसेत् ।
हृदुर्विनिःसृतनाडीनां सहस्राणां हिसप्ततिः ॥
तन्मध्यावस्थितं तेजः शशिप्रभया भाति यत् ।
यन्मध्यमखण्डलेच्छात्मा विभूमाननदीवयत् ।
संज्ञातव्यांविदित्वा त संसरेन्न पुनर्यतः ॥
भूरिभुवमधोवक्त्रं तत्रज्ञातव्यं व्यवस्थितम् ।
नानुच्छेदेन वातेन कृत्वोद्धास्य विकासयेत् ॥
विकास्य तस्य मध्यस्थ मचलं दीपशिखेव तत ।

तदूर्द्धं निःसरेत्शुभ्रं सूक्ष्मं तत्तु विचिन्तयेत् ॥
ललनद्वारनिर्गच्छन् कुन्तयोगीच चिन्तयेत् ।
तावत्तु चिन्तयेद्यावन्निरालम्बञ्च इच्छति ॥
निरालम्बं यदा ध्यान कुर्वाणो निश्चलो भवेत् ॥
तदा तदुच्यते ब्रह्म स योगी ब्रह्मवित्तमः ।
तत्पदञ्च पदातीनां तत्प्राप्तौ मुक्त उच्यते ॥
इति ध्यानं विधातव्य मुक्तिकाङ्क्षि द्विजैर्द्विजाः ।
भूतानामात्मभूतस्य तानि सम्यक् प्रपश्यतः ॥
विमुच्यत्यमरो मार्गं पद किं न पदस्य तु ।
यो न तिष्ठति यो याति न कश्चित्सर्वथैव यः ॥
अवाच्यो वाङ्मयोऽन्यस्तु सर्वश्रुति प्रचोदितः ।
योऽन्तिकेऽपि दवीयांश्च योऽस्तिनास्तिस्वरूपकः ॥
यस्येद नामसेति म तत्रैव च प्रलीयते ।
यस्तु सर्वाणि भूतानि पश्यत्यात्मगतानि तु ॥
आत्मानं तेषु सर्वेषु ततो यो न विमुज्यते ।
सर्वभूतानि भूतात्मा यत्र तिष्ठति धीमते । ॥
शौचमोहौ च कौ तस्य ह्येकञ्च ह्यनुपश्यतः ।
समाप्तावन्तमादीनां यन्मन्त्र ब्रह्म यो द्विजः ॥
ॐ ख ब्रह्मेति चाम्नायो दर्शकश्चैव वेधसः ।
आत्मज्ञानबहुपाया उक्ता स्त्वन्ये च कोविदैः ॥
तै स्तैः सर्वैः स मन्तव्यो स ज्ञातव्योपदेशतः ।
ज्ञातव्यः परमात्मैवं भक्तिं कृत्वा परेण तु ।
ध्यानज्ञानस्य तद्भक्तो यत्र विश्रमते मनः ॥
तदेवोपदिशेत्तस्य वस्तुज्ञानोपदेशकम् ।

मनो यस्य विशत्यन्तु यत्र ज्ञाते च वस्तुनि॥
ध्यायेत्तु तद्देवेति यावत् स्यात् ध्यानसन्ततिः।
ध्याने तत्र तु संलग्ने परावात्मनि वा पुनः॥
ध्यान नियोजयेद्योगी तं निरालम्बतां नयेत्।
योगशास्त्रेषु यत्प्रोक्तं रहस्यारण्यकेषु च॥
तत्तथोपदिशेद्ध्यान ध्यायेदपि तथैव च।
प्रवदन्त्यन्यथा केचिच्छुभादिभेदवांस्ततः॥
त्रैविध्यं विदुषो विद्वन्विद्धि तत्त्वपरे पदम्।
विघ्नज स्मृतिजं भावं भावनाभावमेव च॥
त्रिविद्यमात्मविद्योत योगाभ्यासफलाफलम्।
आत्मशक्तिशिवस्येति चैतन्यमतिसंस्थितम्॥
उत्तरोत्तरवैशिष्ट्यात् योगाभ्यासः प्रवर्त्तते।
स एको निष्कलीभूतः कर्मात्मा यत्र योजितः॥
न बिभेति सचैकाकी भयं वै जायतेऽन्यतः।
न देवगतिर्भिन्ना ध्यानं यस्यास्ति योगिनः॥
सम्बित्तोऽत्र त्वजं शान्त कदाचित् कुवरेण तत्।
त्र्यम्बकश्च चतुर्वक्त्रश्चतुर्बाहुः परेश्वरः॥
एकएव महेशो वै ततस्त्रिधेति कीर्तिता।
नाभिमध्यस्थितं विद्वन्विज्ञानेन सुनिर्मलम्॥
रविवद्भजमानन्तु काशद्रश्मिगणैर्द्विजाः।
चिन्तयेद्धृदि मध्यस्थं दीप्तिमत् सूर्य्यमण्डलम्॥
तस्य मध्यगतो सोमवह्निचन्द्रशिखा महान्।
तन्मध्यन्तु परं सूक्ष्मन्तद्ध्यायेद्योगमात्मनः॥
तन्मध्ये चिन्तयेद्देवं वक्ष्यमाणक्रमेण तु।

विश्वमध्यगतो नादो नादमध्यगतो ध्वनिः ॥
ध्वनिमध्यतः सारः सारमध्यगतोंऽशुमान् ।
तस्य मध्यगतं ब्रह्म शान्तं तस्य तु मध्यगम् ॥
परं पदन्तु यच्छान्तं स्थूलमुत्सृज्य यो व्रजेत् ।
जीवात्मा कायमध्यस्थः स्वतोऽपि देहवर्जितः ॥
वक्त्रनासापुटस्थस्तु भुञ्जीत हृदयात् प्रभुः ।
इत्येतद्ध्यानमार्गन्तु वदन्ति कवयो द्विजाः ॥
कश्चिदन्यान्यथा ब्रूयुरूपं ब्रह्मविदो विदुः ।
न ममापि हि दुःखस्य ग्रासं यत्र निरन्तरम् ॥
ब्रह्मणोरूपमामनन्दन्तमुक्तरूपं मुच्यते ।
सर्वव्यापी य एकस्तु यश्चानन्तश्च भावकः ॥
स मन्तव्योऽजरोऽप्यात्मा सर्वं व्याप्य च यः स्थितः ।
एकं व्योम यथानेकं प्रविधं रूपलक्ष्यते ॥
एकोऽप्यात्मा तथानेको जलाधारेषु सूर्यवत् ।
विश्वरूपोमणिर्यद्वद्वर्णान् गृह्णात्यनेकधा ॥
उपाधिस्थस्तथा त्वेको न नादेहेन कर्मतः ।
कलाकाष्ठादिभेदेन वत्समाद्यभिभेदतः ॥
एकः कालो यथा नाना तथात्मैकोऽप्यनेकधा ।
देहमध्यस्थितं देवं यो न ध्यायति मूढधीः ॥
सोऽर्कलब्धं मधु त्यक्त्वा लक्ष्यायाश्चो गिरौ व्रजेत् ।
यत्तीर्थयानं जपयागहोमान् कुर्यादपुष्मान् सतु वैष्णवः स्यात् सर्वैव पिण्डं परिहृत्य दूरादक्षप्रभावैश्च वरिष्ठपृष्ठे ॥
संस्थाप्य वै विधिवदात्मकरणोग्रपक्षौ
पापेन कुम्भदवधात्दवरेण मनम् ।

आरोप्य सोऽर्थज्ञत दण्डमुखेन तूर्णं
हृत्पद्मसद्मस्थितमतिप्रहीणाम् ।
द्वौ मार्गावात्मनो ज्ञेयौ ब्राह्मणैर्ब्रह्मचिन्तकैः ।
अभियाति विदित्वाथ सायुज्यं परवेधसः ॥
विद्वन्धूमादिरेको वै द्वितीयस्तु विराडिकः ।
यत्र देवौ प्रतीतव्यौ यत्प्रतीतिरजायत ॥
धूमः क्षिप्रं सितः पक्षो दक्षिणायनमेव च ।
लोकपित्यञ्च चान्द्रञ्च मातरिश्वानुकर्षणाः ॥
पाथोधात्री कषादेरे सम्भवन्ति समाश्रिताः ।
अर्चिरहः सितः पक्ष स्तथावैवोत्तरायणम् ॥
देवलोक स्तथा सूर्य्य. विद्युतश्च क्रमादिमान् ।
मनसा पुरुषा यान्ति तानतो ब्रह्मलोकताम् ॥
यत्र जातो पुनर्देह संसरन्ति पुनर्द्विजाः । ।
मार्गं ह्यय पुनर्धीमन्मन्तव्यं सद्विजैर्द्विजः ॥
यन्न ज्ञातेन विज्ञातुं नाकमोक्षौ च सिध्यतः ।,
स आत्मस्वभिन्नूणां त्रयाणामपि स द्विजाः । ॥
समानज्ञानमेतद्वदृति ब्रह्मविदोविदुः ।
यथा दहति वैधांसि समिद्धस्त्वाशुशुक्षणिः ॥
ज्ञानमभ्यस्यमानन्तु तथा दहति संहतीः ।
तस्मान्मार्गद्वयेनापि ज्ञात्मात्त्रेयो भवेद्दिजैः ॥
ये न जानन्ति तेषान्तु दूरं यूकादियोनिषु ।
पन्नगत्वं क्रमित्व वा कीटत्व मथवाप्नुयुः ॥
एतेभ्यस्त्वधमेभ्यश्च जायन्ते तासु योनिषु ।
विद्याविद्भिः स मन्तव्यः स हेतुः स्वर्गमोक्षयोः ॥

विद्यामोक्षप्रदासा च अविद्यामन्युनाशकृत् ।
ज्ञानयोग स्तथाकर्म विद्याविद्भिः स्मृतो बुधैः ॥
अपवर्गाय वै नृणां कर्म त्रिविष्टपाय च ।
कर्मापि क्रियमाणं निरपेक्षं मोक्षकृद्भवेत् ॥
विष्णवे गुरवे वापि कर्म कृत्वा निवेदयेत् ।
आत्मनः फलमिच्छद्भि र्यत्कर्म क्रियते नृभिः ॥
तेनैव वाञ्छितावाप्ति स्तेनान्यद्वोपजायते ।
हरिं वानित्यमभ्यस्य सर्वभावेन सद्द्विजैः ॥
तदभ्यासवदाप्नोति मृत्युदाहात् हरिस्मृतेः ।
एक एव हि स ध्येयो यत्पर नास्ति किञ्चन ॥
विनाशमान् महानेष स ध्येयः सर्वेन्द्रियैः ।
महान्त पुरुष देवं हृदिरूप मतःपरम् ॥
ब्रह्मवित्मत्यमत्युर्वै प्रयाति ह्यनिवर्त्तकम् ।
एष एव नृणां पन्था ब्रह्मा वै य मुपासते ॥
दास्य जन्मस्वनेकेषु विचितस्वैकचेतसाम् ।
नाभिभक्तापि वै केन नान्यभ्यासकृतेरपि ॥
ब्रह्माप्तिजन्मनां पुंसां किन्तु सा भूरिजन्मभिः ।
यतयः सर्वदाभ्यासाद्ब्रह्म यन्न प्रपेदिरे ॥
तन्मनुष्यैः कथं प्राप्य मेकेनैव तु जन्मना ।
ज्ञानाभ्यासेन तद्ब्रह्म तैश्च, दम्भस्वरूपकैः ॥
न प्राप्यते परं ब्रह्म न वाप्यासनमुद्रया ।
बहुभिः किमुपायैस्तु मोक्तैर्वा ग्रन्थविस्तरैः ॥
एकमेवाभ्यसेत्तन्तु ये न चित्ते भवेद्धरिः ।
एकैव शुद्धिस्तु सदा यथा स्यात् क्रियतां तथा ॥

मैत्र कुर्य्यान्मनस्यन्यं विरुद्धमिति सर्वथा।
भावः स्वर्गाय मोक्षाय नरकायापि स स्मृतः॥
तस्मात्तं शोधयेद्यत्नाच्छुचिः स्याद्भावशुद्धितः
एकस्य पुत्रकर्त्तारौ भक्तस्यापि च योषितः॥
भिन्नभावौ भवेतान्तावतीव वै विशोधयेत्।
परिष्कृतो नरो नार्याः संह्लादयति यौवनम्॥
तल्पस्थोऽपि सकामान्तां भावहीनो न कामयेत्।
एकीभावो हसैकार्थौ यथा स तु न वै चलेत्॥
तद्बुद्ध्या पश्यतामिच्छन् स्वर्गमोक्ष मवाप्नुयात्।
कृत्वापि विविधान्यागांस्तपस्तप्त्वा सुदुष्करम्॥
मृत्युकाले मतिर्यस्याद्गतिं तानेव विन्दति।
योगप्रयोगः कथितः द्विजेन्द्रा। ध्यानस्य मार्गो बहुधापि वापि।
योऽभ्यस्यमानस्तु भवद्विधानां ब्रह्माप्तिकृदस्तु तथा द्विजानाम्।
प्रत्याहारश्च योगश्च ध्यानविस्तरतस्तथा।
उक्ता द्विजहितार्थं वै ब्रह्मावाप्तिकरं द्विजाः।
अङ्गुल्यङ्गुष्ठयोर्नोदक्षणं स्यात्तद्द्वय त्रुटिः।
द्वाभ्याञ्चैव लवस्ताभ्यां निमेषोऽपि लवद्वयम्॥
तैः पञ्चदशभिः काष्ठास्ताश्च त्रिंशत्कलाः स्मृताः।
द्वाविंशति त्रिभागस्तु त्रुटिकेति प्रकीर्तिता॥
तद्द्वयञ्च मुहूर्त्तः स्यात्ते त्रिंशत्तु चयादिनम्।
तत्पञ्चदशकं पक्षस्तद्द्वयं मास उच्यते॥
तद्द्वयं ऋतुरित्युक्तं तद्द्वयं काल उच्यते।
तत्त्राद्ध्ययनं प्रोक्तं तद्द्वयं वत्सरस्तथा।
पञ्चभिस्तैर्युगः प्रोक्तो तद्द्वादशकषष्ठकम्॥

षष्ठकः षष्टिगुणितो वाक्पते युगमुच्यते ।
षष्टिघ्नः सोऽपि कालज्ञैः प्रजानाञ्च युगः स्मृतः ॥
तद्द्वयन्तु कलिः प्रोक्तो तद्द्वय द्वापरं भवेत् ।
कलित्रयाणां त्रेता स्यात् कृतं कलिचतुष्टयम् ॥
कलिभिर्दशभिर्विद्वान् चतुर्युग मिति स्मृतम् ।
चतुर्युगसहस्रेण त्वज्ञाहः कल्प उच्यते ॥
अष्टयुगा पितृसन्ध्या सायसन्ध्या पितावती ।
तदेकसप्ततिगुणा मन्वन्तर मिति स्मृतम् ॥
मन्वन्तरद्वयेनेह शक्रत्रयः प्रकी र्तित. ।
एवं मानेन वर्षाणां शतं ब्रह्मत्रयः स्मृतः ॥
ब्रह्मत्रयशतेनापि विष्णोरेक महर्भवेत् ।
एतद्विधाः समासेन प्रयान्त्यब्दशते द्विजाः । ॥
रुद्रस्यात्मनि लीयन्ते भूतभौतिकसृष्टयः ।
लब्धं यथानेन परंपदं तत्तद्ध्यानयोगात् सतु तत्र लीयते ।
परम्पराणां परमत्वचिन्त्वं परात्परं दिष्टपदादतीतम् ॥
क्षणादिकाल क्रमशोऽप्यमक्तः प्रयाति चैतत्पदमव्ययं तत् ।
कालज्ञानेन योगेन योगिभि ध्यानकारिभिः ॥
मुमुक्षुभिः सदा ज्ञेयं निरालम्बं परं पदम् ।
पराशरोक्तशास्त्रन्तु चातुर्वर्ण्य जनाश्वरेत् ॥
हितमुक्तं प्रयत्नेन सदा ध्येयं विजायते ।
श्रावयिष्यन्ति यः श्राद्धे ब्राह्मणान् भक्तितत्पराः ॥
प्राप्स्यन्ति पितरस्तस्य तृप्तिं वै शाश्वतीं द्विज !
द्वादशं दश वा सप्त षड्ष्टौवाथवा नव ॥

दैविके पैतृके वापि श्लोकाः श्राव्या द्विजातिभिः।
य इदं शृणुयाद्विप्रः श्रावयेत्पाठयेदपि॥
स प्रध्वस्तसमस्तैना ब्रह्मलोक मवाप्नुयात्।
त्रिभिः श्लोकसहस्रैस्तु त्रिभि र्द्दतशतैरपि॥
पाराशरोदितं शास्त्रं सुव्रतः प्रोक्तवान् मुनिः॥

इति श्रीबृहत्पाराशरस्मृतिः सम्पूर्णा।

---

# लघुव्याससंहितायाम् ।

## प्रथमोऽध्यायः ।

ऋषय ऊचुः ।

अहन्यहनि कर्त्तव्यं क्रमाणां हि क्रमाद्विधिम् ।
ब्राह्मे मुहूर्त्ते उत्थाय धर्मार्थावनुचिन्तयेत् ॥
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थ मेवच ।
उषः काले तु सम्प्राप्ते कृत्वाचावश्यकं बुधः ॥
स्नायान्नदीषु शुद्धासुः शौचं कृत्वा यथाविधि ।
प्रातः स्नाने न पूयन्ते येऽपि पापकृतो जनाः ॥
तस्मात्सर्वः प्रयत्नेन प्रातःस्नानं समाचरेत् ।
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टफलप्रदम् ॥
ऋषीणां कुर्वतां नित्यं प्रातःस्नान न संशयः ।
मुखे सुप्तस्य सततं लालानित्यं स्रवन्ति हि ॥
ततो नैवाचरेत्कर्माण्यकृत्वा स्नानमादितः ।
अलक्ष्मी कालकर्णीच दुःस्वप्न दुर्विचिन्तनम् ॥
प्रातःस्नानेन पूयन्ते सर्वेपापान्न संशयः ।
न हि स्नानं विना पुंसां प्राशस्त्यं कर्मसु स्मृतम् ॥
होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत् ।
अशक्तोऽवशिरस्कं वा स्नानमात्रं विधीयते ॥
आर्द्रेण वाससा चाङ्गमार्जनं कापिलं स्मृतम् ।

अप्राशस्त्ये समुत्पन्ने स्नानमेव समाचरेत्॥
ब्राह्मादीन्यथवाशक्तौ स्नानान्याहुर्मनीषिणः।
ब्राह्ममाग्नेय मुद्दिष्टं वायव्यं दिव्यमेव च॥
वारुण यौगिकं चैव सदा स्नान प्रकीर्त्तितम्।
ब्राह्मं तु मार्जन मन्त्रैः कुशैः सोदकविन्दुभिः॥
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्।
यत्तु सातपवर्षेण तत् स्नानं दिव्यमुच्यते॥
वारुणञ्चावगाहञ्च मानसञ्चात्मवेदनम्।
यौकिकं स्नानमाख्यातं योगोऽयं विष्णुचिन्तनम्॥
आत्मतीर्थमिद ख्यात सेवित ब्रह्मवादिभिः।
मनःशुद्धिकरं पुसां नित्यं तत् स्नानमाचरेत्॥
शक्तश्चेद्वारुणं विद्वानप्राशस्त्ये तथैवच।
प्रचाल्य दन्तकाष्ठञ्च भचयित्वा विधानतः॥
आचम्य प्रयतोनित्यं प्रातःस्नानं समाचरेत्।
मध्याङ्गुलिसमस्थौल्य द्वादशाङ्गुलिसम्मितम्॥
सत्वचन्दन्तकाष्ठ स्यात्तस्याग्रेण तु धावयेत्।
चीरवृचसमुद्भूतं मालिनीसम्भवं शुभम्॥
अपामार्गञ्च विल्वञ्च करवीरं विशेषत।
वर्जयित्वा निषिद्धानि गृहीत्वैकं यथोदितम्॥
अपहृत्य दिन पाप भचयित्वा विधानवित्।
आचम्य प्रयतोनित्यं स्नान प्रातः समाचरेत्॥
नोत्पादयेद्दन्तकाष्ठमङ्गुल्या धावयेत् क्वचित्।
प्रचाल्य भक्त्या तर्जन्या शुचौ देशे समाहितः॥
स्नात्वा मन्त्रर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात्।

आचम्य मन्त्रवन्नित्यं पुनराचम्य वाग्यतः ॥
मार्जनं वारुणैर्मन्त्रैरात्मानं सकुशोदकैः ।
आपोहिष्ठादिव्याहृतिभिः सावित्र्या वारुणैस्तथा ॥
ओङ्कारव्याहृतियुक्तां गायत्रीं वेदमातरम् ।
जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥
प्राक् तु तेन समासीनो दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः ॥
या सन्ध्या सा जगत्सृष्टिस्थितिसंयमकारिणी ।
ऐश्वरी तु पराशक्तिस्तत्र यत्र समुद्भवा ॥
सवितुर्मण्डलगतां गायत्रीं वै जपेद्बुधः ।
प्राङ्मुखः प्रयतो विप्रः सन्ध्योपासनमाचरेत् ॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत् कुरुते कर्म न तस्य फलमाप्नुयात् ॥
अनन्यचेतसो शान्ता ब्राह्मणा वेदपारगाः ।
उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वे परां गतिम् ॥
योऽन्यतः कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥
तस्मात्सर्वप्रयत्नेन सन्ध्योपासं समाचरेत् ।
उपासितो भवेत्तेन देवयोगतनुः परः ॥
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं वै जपेद्विद्वान् ब्राह्मणः प्रयतः स्थितः ॥

इति लघुव्यासस्मृतौ प्रथमोऽध्यायः ।

---

# द्वितीयोऽध्याय:।

अथागम्य गृहं विप्र: समाचम्य यथाविधि ।
अग्निं प्रज्वाल्य विधिवत् जुहुयाज्जातवेदसम् ॥
ऋत्विक् पुत्रोऽथवा पत्नी शिष्योऽपि च सहोदर: ।
प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि ॥
पवित्रपाणि: शुद्धात्मा शुक्लाम्बरधरोऽपर: ।
अनन्यमानसो वह्नौ जुहुयात्संयतेन्द्रिय: ॥
विना दर्भेण यत्कर्म विना सूत्रेण वा पुन: ।
राक्षसं तद्भवेत्सर्वं नेहामुत्र फलप्रदम् ॥
दैवतादीन्नमस्कुर्यादुपहारं निवेदयेत् ।
दद्यात्पुष्पादिकं तासां वृद्धांश्चैवाभिवादयेत् ॥
गुरुञ्चैवाप्युपासीत हितं तस्य समाचरेत् ।
वेदाभ्यासं तत: कुर्यात्प्रयत्नाच्छक्तितो द्विज: ॥
वेदमध्यापयेच्छिष्यान् धारयेच्च विपाठयेत् ।
अपेक्षेत च शास्त्राणि मन्वादीनि द्विजोत्तमा: ॥
वैदिकांश्चियमान्वेदान्वेदाङ्गानि च सर्वश: ॥
उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये ।
साधयेद्विविधानर्थान् कुटुम्बार्थे तथैव च ॥
ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ।
पुष्पाक्षतान्कुशतिलान् गोमयं गन्धमेव च ॥
नदीषु देवखातेषु तडागेषु सरित्सु च ।
स्नानं समाचरेन्नित्यं नदीप्रस्रवणेषु च ॥
परकीयनिपानेषु न स्नायाद्वै कदाचन ।
पञ्च पिण्डान् समुद्धृत्य स्नायाद्वा सम्भवात् पुन: ॥

खड्गैकया शिरः क्षाल्य द्वाभ्यां नाभे स्तथोपरि ।
अतश्चतसृभिः कार्यं पादौ षड्भि स्तथैव च ॥
मृत्तिका च समाविष्टा त्वार्द्रामलकमात्रतः ।
गोमयस्य प्रमाणं तत् तेनाङ्गं लेपयेत्ततः ॥
लेपयेद्यतीरस्थस्तल्लिङ्गैनैव मन्त्रतः ।
प्रक्षाल्याचम्य विधिवत् ततः स्नायात्समाहितः ॥
अभिमन्त्र्य जलैर्मन्त्रैरब्लिङ्गैर्वारुणैः शुभैः ।
आपो नारायणोद्भूता स्तानेवास्यायन पुनः ॥
तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ।
प्रोक्ष्यसोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये ॥
आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ।
अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः ॥
त्वं यज्ञस्त्वं वषट्कार आपोज्योतिरसोऽमृतम् ।
द्विपदां वा त्रिरभ्यस्येद्व्याहृतिं प्रणवादिकाम् ॥
सावित्रीं वा जपेद्विद्वान् स्तथैवाघमर्षणम् ।
ततः सम्मार्जनं कुर्य्यादापोहिष्ठामयोभुवः ॥
इदमापः प्रवहत व्याहृतिभिस्तथैव च ।
ततोऽभिमन्त्र्य तत्तीर्थमापोहिष्ठादिमन्त्रकैः ॥
अन्तर्गत जलेमग्नो जपेत् त्रिरघमर्षणम् ।
द्विपदां वाथ गायत्रीं तद्विष्णोः परमम्पदम् ॥
आवर्त्तयेद्वा प्रणवं देवं वा संस्मरेद्धरिम् ।
द्विपदोहि परो मन्त्रो यजुर्वेदे प्रतिष्ठितः ॥
अन्तर्जलात्त्रिरावृत्या सर्वपापैः प्रमुच्यते ।
आपः पाणौ समादाय जप्त्वा वा मार्जने कृते ॥

विन्यस्य मूर्ध्नि तत्तोयं सर्वपापैः प्रमुच्यते ।
यथाश्वमेधः क्रतुराट् सर्वपाप प्रणोदनः ॥
तथाघमर्षणं सूक्तं सर्वपाप प्रणोदनम् ।
अथोपतिष्ठेतादित्य मूर्ध्वं पुष्पाञ्जलान्वितम् ॥
प्रक्षिप्य देवमादित्यं ऋग्यजु सामरूपिणम् ।
उदित्यञ्चित्रमित्येतत् तच्चक्षुरितिमन्त्रतः ॥
हंसः शुचिषु इत्येतत्सावित्र्या च विशेषतः ।
अन्यैश्च वैदिकैर्मन्त्रैः सर्वपाप प्रणाशनैः ॥
सावित्रीं वै जपेत् पश्चाज्जपयज्ञः प्रकीर्त्तितः ।
विविधानि पवित्राणि गुह्यविद्यास्तथैव च ॥
तिष्ठन् तदेक्षमाणोऽर्कं जपं कुर्यात्समाहितः ।
आसीनः प्राङ्मुखो नित्यं जपं कुर्याद्यथाविधि ॥
स्फटिकेन्द्राक्षपद्माद्यैः पत्र दीप कुशाचकैः ।
कर्त्तव्या त्वक्षमाला स्यात् विशिष्टा चोत्तरोत्तरा ॥
जपकाले न भाषेत नाङ्गानि चालयेत्तथा ।
न कम्पयेच्छिरोग्रीवां दन्तान्वै न प्रकाशयेत् ॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं हि तत् ।
एकान्ते तु शुचौ देशे तस्माज्जप्य समाचरेत् ॥
चण्डाला शुद्ध पतितान् दृष्ट्वाचम्य पुनर्जपेत् ।
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ॥
सौरान्मन्त्रान्यथोत्साहं पावमानांश्च शक्तितः ।
आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत् ॥
ततः सन्तर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात् ।
आदौ ॐकारमुच्चार्य नाम्नोऽन्ते तर्पयामि च ॥

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
पितॄन् तिलोदकैश्चैव विधिना तर्पयेद्बुधः ॥
अपसव्येन सव्येन पाणिना दक्षिणेन तु ।
देवर्षींस्तर्पयेद्धीमान् उदकाञ्जलिभिः पितॄन् ॥
यज्ञोपवीती देवानां निवीति ऋषितर्पणे ।
प्राचीनावीति पित्र्येषु स्वेन तीर्थेन भाषितम् ॥
निष्पीड्येव तु वस्त्रञ्च समाचम्य यथाविधि ।
यैर्मन्त्रैरर्चयेद्देवान् पुष्पैः पत्रैस्तथाम्बुभिः ॥
ब्रह्माणं शङ्करं सूर्य्यन्तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् पूजां कृत्वा द्विजः ॥
प्रदद्यादाय पुष्पाणि विन्यसेच्च पृथक् पृथक् ।
न विष्णाराधनात् पुण्यं विद्यते कर्म वैदिकम् ॥
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ।
तद्विष्णोरितिमन्त्रेण सूक्तेनापौरुषेण च ॥
नैताभ्यां सदृशो मन्त्रो वेदपूक्तश्चतुर्ष्वपि ।
निवेदयित्वा चात्मानं विमलन्तत्र तेजसि ॥
तदात्मा तन्मनः शान्तः तद्विष्णोरितिमन्त्रतः ।
अथवा देवमीशानम्भगवन्तं सनातनम् ॥
आराधयेन्महेशान महादेवं महेश्वरम् ।
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ॥
ईशानेनाथ वा रुद्रैस्त्र्यम्बकेन समाहितः ।
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ॥
अथोनमः शिवायेति मन्त्रेणानेन वाचयेत् ।
नमस्कुर्यान्महादेवं ऋतं परमेश्वरम् ॥

निवेदयित्वा स्वात्मानं यो ब्रह्माणमतःपरम् ।
प्रदक्षिणन्ततः कुर्य्यात्ततो ब्रह्माणि वै जपेत् ॥
ध्यायेत देवमीशान व्योममध्यगतं शुभम् ।
अथवा लोकयेदर्कं हंसः शुचिषदित्यृचा ॥
कुर्य्यात् पञ्चमहायज्ञान् गृहङ्गत्वा समाहितः ।
देवयज्ञं पितृयज्ञम्भूतयज्ञन्तथैव च ॥
मनुष्य ब्रह्मयज्ञञ्च पञ्चयज्ञान् प्रचक्षते ।
यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ।
कृत्वामनुष्य यज्ञं हि ततः स्वाध्याय मारभेत् ॥
अग्नेः पश्चिमतो देशे भूतयज्ञान्तरेऽथवा ।
कुशपूतैः समासीनं कुशपाणिः समाहितः ॥
श्रौताग्नौ लौकिकेचापि जले भूम्या मथापिवा ।
वैश्वदेवश्च कर्त्तव्यो देवयज्ञः स संस्मृतः ॥
यदि स्याल्लौकिके पक्षं तदन्नं तत्र हूयते ।
शालाग्नौ तत्पचेदग्नौ विधिरेषः सनातनः ॥
देवेभ्यश्च हुतादन्नाच्छेषाद्भूत बलिं हरेत् ।
श्वभ्यश्च श्वपदेभ्यश्च पतितादिभ्यएव च ॥
दद्याद्भूमौ भूत बलिं कृमिभ्योऽथ द्विजोत्तमः ।
सायन्तनस्य सिद्धस्य पक्षमन्नं बलि हरेत् ॥
वैश्वदेवं विनार्थेन सायम्प्रातर्विधीयते ।
एकन्तु भोजयेद्विप्र पितृनुद्दिश्य यत्सदा ॥
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः ।
उद्धृत्य वायथाशक्तः किञ्चिदन्नं समाहितः ॥
वेदार्थ तत्व विदुषे द्विजायै वोप पादयेत् ।

यो भुङ्क्ते वेष्टित शिरा यस्तु भुङ्क्ते विदिङ्मुख:॥
सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम्।
नार्धरात्रे न मध्याह्ने नाजीर्णे नार्द्र वस्त्रधृक्॥
न च भिन्नासनगतो न शयान स्थितोऽपि वा।
नोपानत्पादुकी चापि न च संविलपन्नपि॥
भुङ्क्ते च सुखमास्थाय तदन्न परिणामयेत्।
इतिहास पुराणाभ्यां वेदार्थ मुपबृंहयेत्॥
तत: सन्ध्या मुपासीत पूर्वोक्त विधिना द्विज:।
आसीनस्तु जपेद्देवीं गायत्रीं पश्चिमाम्प्रति॥
नानुतिष्ठति य: पूर्वामुपास्ते न च पश्चिमाम्।
स शूद्रेण समोलोके सर्वकर्म विगर्हित:॥
हुत्वाग्नौ विधिवन्मन्त्रै र्भुक्त्वा यज्ञावशिष्टकम्।
विसृज्य बान्धवजनं शयीच्छुष्कपदो निशि।
नोत्तराभि मुख: सुप्यात् पश्चिमाभिमुखो न च॥
अप्राङ्मुखो न नग्नो वा न च भिन्नासने क्वचित्।
न भग्नायान्तु खट्वायां शून्यागारे तथैव च॥
इत्येव मखिलं प्रोक्तं अहन्यहनि वै पुरा।
ब्राह्मणोक्तं कृत्यजातं अपवर्ग फलप्रदम्॥
नास्तिक्यादथवालस्यात् ब्राह्मणो न करोति य:।
स याति नरकान् घोरान् शूकरेष्वभि जायते॥
नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधिं स्वकम्।
तस्मात्सर्व्वाणि भूतानि मुक्तये परमेष्ठिन:॥

इति लघुव्यासस्मृतौ द्वितीयोऽध्याय:।

लघुव्याससंहिता समाप्ता।

# व्याससंहितायाम् ।

## प्रथमोऽध्यायः ।

---

वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिम् ।
पप्रच्छुर्मुनयोऽभ्येत्य धर्म्मान् वर्णव्यवस्थितान् ॥
स पृष्टः स्मृतिमान् स्मृत्वा स्मृतिं वेदार्थगर्भिताम् ।
उवाचाथ प्रसन्नात्मा मुनयः श्रूयता मिति ॥
यत्र यत्र स्वभावेन कृष्णसारो मृगः सदा ।
चरते तत्र वेदोक्तो धर्मो भवितुमर्हति ॥
श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा ॥
ब्राह्मणक्षत्रिय विशस्त्रयो वर्णा द्विजातयः ।
श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु नेतरे ॥
शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥
विप्रवद्विप्रविन्नासु क्षत्रविन्नासु विप्रवत् ।
जातकर्म्माणि कुर्व्वीत ततः शूद्रासु शूद्रवत् ॥
वैश्यासु विप्रक्षत्राभ्यां ततः शूद्रासु शूद्रवत् ।
अधमादुत्तमायान्तु जातः शूद्राधमः स्मृतः ॥
ब्राह्मण्यां शूद्रजनितश्चण्डालो धर्मवर्जितः ।
कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः ॥

ब्राह्मण्यां शूद्रजनितश्चाण्डालस्त्रिविधः स्मृतः ।
वर्द्धकीनापितोगोपश्चाशापः कुम्भकारकः ॥
वणिक्किरातकायस्थमालाकार कुटुम्बिनः ।
वरटोमेदचण्डालदासश्वपचकोलकाः ॥
एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः ।
एषां सम्भाषणात् स्नानं दर्शनादर्कवीक्षणम् ॥
गर्भाधानं पुंसवनं सीमन्तोजातकर्म च ।
नामक्रियानिष्क्रमणेऽन्नाशन वपनक्रिया ॥
कर्णवेधोव्रतादेशो वेदारम्भक्रियाविधिः ।
केशान्तः स्नानमुद्वाहोविवाहाग्निपरिग्रहः ॥
त्रेताग्निसंग्रहश्चेति संस्काराः षोड़श स्मृताः ।
नवैताः कर्णवेधान्तामन्त्रवर्जं क्रियाः स्त्रियाः ॥
विवाहोमन्त्रतस्तस्याः शूद्रस्यामन्त्रतोदश ।
गर्भाधानं प्रथमतस्तृतीये मासि पुंसवः ॥
सीमन्तश्चाष्टमे मासि जाते जातक्रिया भवेत् ।
एकादशेऽह्नि नामार्कस्येक्षा मासि चतुर्थके ॥
षष्ठे मास्यान्नमश्नीयाच्चूड़ाकर्म कुलोचितम् ।
कृतचूड़े च बाले च कर्णवेधोविधीयते ॥
विप्रोगर्भाष्टमे वर्षे क्षत्रएकादशे तथा ।
द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हति ॥
तस्य प्राप्तव्रतस्यायं कालः स्यात्द्विगुणाधिकः ।
वेदव्रतच्युतोव्रात्यः स व्रात्यस्तोममर्हति ॥
द्वे जन्मनी द्विजातीनां मातुः स्यात् प्रथमं तयोः ।
द्वितीयं छन्दसां मातुर्ग्रहणाद्विधिवद्गुरोः ॥

एवं द्विजातिमापन्नोविमुक्तोवाल्यदोषतः ।
श्रुतिस्मृतिपुराणानां भवेदध्ययनक्षमः ॥
उपनीतो गुरुकुले वसेन्नित्यं समाहितः ।
विभृयाद्दण्डकौपीनोपवीताजिनमेखलाः ॥
पुण्येऽह्नि गुर्वनुज्ञातः कृतमन्त्राहुतिक्रियः ।
स्मृत्वोङ्कारञ्च गायत्रीमारभेद्वेदमादितः ॥
शौचाचारविचारार्थं धर्मशास्त्रमपि द्विजः ।
पठेत गुरुतः सम्यक् कर्म तद्दिष्टमाचरेत् ॥
ततोऽभिवाद्य स्थविरान् गुरुञ्चैव समाश्रयेत् ।
स्वाध्यायार्थं तदा यत्नः सर्वदा हितमाचरेत् ॥
नापक्षिप्तोऽपि भाषेत न व्रजेत्ताड़ितोऽपिवा ।
विद्वेषमथ पैशुन्यं हिंसनञ्चार्कवीक्षणम् ॥
तौर्यत्रिकानृतोन्मादपरिवादानलङ्क्रियाम् ।
अञ्जनोद्वर्त्तनादर्शस्रग्विलेपनयोषितः ॥
वृथाटनमसन्तोष ब्रह्मचारी विवर्ज्जयेत् ।
ईषच्चलितमध्याह्नेऽनुज्ञातोगुरुणा स्वयम् ॥
आलोलुपश्चरेद्भैक्षं व्रतिषूत्तमवृत्तिषु ।
सद्योभिक्षान्नमादाय वित्तवत्तदुपस्पृशेत् ॥
कृतमाध्याह्निकोऽश्नीयादनुज्ञातोयथाविधि ।
नाद्यादेकान्नमुच्छिष्टं भुक्त्वा चाचामिताक्रियात् ॥
नान्यद्भिक्षितमादद्यादापन्नोद्रविणादिकम् ।
अनिन्द्यामन्त्रितः श्राद्धे पैत्र्येऽद्याद्गुरुचोदितः ॥
एकान्नमप्यविरोधे व्रतानां प्रथमाश्रमी ।
भुक्त्वा गुरुमुपासीत कृत्वा सन्धुक्षणादिकम् ॥

समिधोऽग्नावादधीत ततः परिचरेद्गुरुम् ।
अधीत गुर्वनुज्ञातः प्रह्वश्च प्रथमं गुरोः ॥
एवमन्वहमभ्यासी ब्रह्मचारी व्रतञ्चरेत् ।
हितोपवादः प्रियवाक् सम्यग्गुर्वर्थसाधकः ॥
नित्यमाराधयेदेनमासमाप्तेः श्रुतिग्रहात् ।
अनेन विधिनाधीतोवेदमन्त्रोद्विजं नयेत् ॥
शापानुग्रहसामर्थ्यमृषीणाञ्च सलोकताम् ।
पयोऽमृताभ्या मधुभिः साज्यैः प्रीणन्ति देवताः ॥
तस्मादहरहर्वेदमनध्यायमृते पठेत् ।
यदङ्गं तदनध्याये गुरोर्वचनमाचरन् ॥
व्यतिक्रमादसम्पूर्णमनहंकृतिराचरेत् ।
परत्रेह च तद्ब्रह्म अनधीतमपि द्विजम् ।
यस्तूपनयनादेतदामृत्योर्व्रतमाचरेत् ॥
स नैष्ठिकोब्रह्मचारी ब्रह्मसायुज्यमाप्नुयात् ।
उपकुर्व्वाणकोयस्तु द्विजः षड्विंशवार्षिकः ॥
केशान्तकर्म्मणा तत्र यथोक्तचरितव्रतः ।
समाप्य वेदान् वेदौ वा वेदं वा प्रसभं द्विजः ॥
स्नायीत गुर्वनुज्ञातः प्रवृत्तोदितदक्षिणः ।
इति श्रीवेदव्यासीये धर्मशास्त्रे प्रथमोऽध्यायः ।

———

